यन्त्वमुम् ! ॥ १६५ ॥ नित्यं षड्रसमाहारं, भुक्त्वा तत्र स्थितोऽप्यऽसौ ॥ गुरुभिः कथ्यते साधुः, कृतदुष्करदुष्करः ! ॥ १६६ ॥ वयमप्येषदन्दे त–च्छास्यामोऽमुमभिग्रहम् । ध्यायन्त इति ते मासान्, कष्टादष्टाऽत्यवाहयन् ! ॥ १६७ ॥ वर्षाकालेऽथ सम्प्राप्ते, मानी सिंहगुहामुनिः ॥ सम्भूतविजयाचार्यान्, प्रणम्येति व्यजिज्ञपत् ॥ १६८ ॥ सर्वदा षड्रसाहार–भोजी कोशानिकेतने ॥ स्थास्याम्यह चतुर्मासीं, स्थूलभद्र इव प्रभो ! ॥ १६९ ॥ अयं हि स्थूलभद्रस्य, स्पर्द्धयाऽङ्गीकरोत्यदः । विमृश्येत्युपयोगं च, दत्त्वैवं सूरिरब्रवीत् ॥ १७० ॥ वत्साभिग्रहमेनं मा–कार्षीर्दुष्करदुष्करम् ॥ क्षमो हि स्थूलभद्रोऽमुं, निर्वोढुं नाऽपरः पुनः ! ॥ १७१ ॥ अपि स्वयम्भूरमण–स्तरीतुं शक्यते सुखम् ॥ अयं त्वभिग्रहो धर्तुं दुष्करेभ्योऽपि दुष्करः ! ॥ १७२ ॥ दुष्करोऽप्यस्ति नाऽयं मे, क्व नु दुष्करदुष्करः ? ॥ करिष्याम्येव तदमु–मित्यूचे स पुनर्गुरून् ॥ १७३ ॥ अथोचे सूरिरेतस्मा–दभिग्रहकदाग्रहात् ॥ वत्स ! ते भाविनी लाभ–मिच्छतो मूलविच्युतिः[1] ! ॥ १७४ ॥ एनामपि गुरोर्वाचं, मुमुक्षुरवमत्य सः ॥ वीरम्मन्यो ययौ कोशा–सदनं मदनाऽऽश्रयम् ! ॥ १७५ ॥ स्पर्धया स्थूलभद्रस्य, नूनमागादयं मुनिः । कोशाऽपि तं विलोकयेति, दध्यौ दक्षाऽनमच्च तम् ॥ १७६ ॥ स्थित्यर्थं प्रार्थयामास, स साधुश्चित्रशालिकाम् ॥ कोशापि तां ददौ सोऽपि, सोत्सेकस्तां प्रविष्टवान् ॥ १७७ ॥ बुभुजे च तया दत्त–माहारं षड्रसाश्रितम् ॥ अथ कोशाऽपि तत्रागा–न्मध्याह्ने तं परीक्षितुम् ॥ १७८ ॥ मृगाक्षीं तां च स प्रेक्ष्य, क्षणात्क्षोभमुपागतः ॥ मदनाऽऽवेशविवशः, संवेशनमयाचत ॥ १७९ ॥ ततः कोशा तमित्यूचे, स्वामिन् ! पण्याङ्गना वयम् ! ॥ स्वीकुर्मः शक्रमपि नो, धनदानं विना कृतम् ! ॥ १८० ॥ मुनिः स्माह प्रसद्य त्वं, मा निर्वापय सङ्गमात् ॥ वह्नौ शैत्यमिवाऽस्मासु, द्रविणं तु सुदुर्लभम् !

१ नाशः । २ तिरस्कृत्य । ३ काम. । ४ मृगस्य अक्षिणी इव अक्षिणी यस्याः सा । ५ व्याकुल. । ६ भोगम् । ७ इन्द्र. ।

॥ १८१ ॥ त्वदाज्ञावित्रस्ताहं, धनमप्यानये द्रुतम् ॥ निवेदयसि चेन्मह्यं, तत्प्राप्तिस्थानमुत्तमम् ॥ १८२ ॥ ततो बोधयितुं सा तं, प्रोचे नेपालभूपतिः ॥ नव्यमाधोर्लक्षमूल्य, प्रदत्ते रत्नकम्बलम् ॥ १८३ ॥ ततस्त्वं तत्र गत्वाऽऽशु, तं समानय मत्कृते ॥ श्रुत्वेति सोऽप्यकालेऽपि, नेपालं प्रति चेलिवान् ॥ १८४ ॥ तत्र गत्वा धराधीशा-द्रत्नकम्बलमाप्य च ॥ ववले स मुनिः सद्यो, वेश्यां ध्यायन्मनोन्तरे ॥ १८५ ॥ तत्र मार्गे स्थितानां च, दस्यूनां शकुनस्तदा ॥ आयाति लक्षमित्यूचे, तदज्ञासीच्च दस्युराट् ॥ १८६ ॥ किमायातीत्यपृच्छच्च, वृक्षारूढं चरं ततः ॥ सोऽप्याख्यद्भिक्षुमेवैकं, वीक्षे कमपि नाऽपरम् ॥ १८७ ॥ अथ तत्रागतं साधुं, धृत्वा चौरा न्यलोकयन् ॥ अपश्यंतश्च किमपि, द्रव्यं ते मुमुचुर्मुनिम् ॥ १८८ ॥ शकुनः पुनरित्याख्य-द्याति लक्षमिदं पुरः ॥ ततो विधृत्य तं साधु-मभ्यधादिति चौरराट् ॥ १८९ ॥ वयं तवाभयं दद्मः, तथ्यं वद किमस्ति ? ते ॥ ततो यतिर्जगौ यूयं, सत्यं शृणुत दस्यवः ! ॥ १९० ॥ अस्ति क्षिप्तो वंशमध्ये, वेश्यार्थं रत्नकम्बलः ॥ मत्पार्श्व इति तेनोक्ते-ऽमुचत्तं चौरराट् मुनिम् ॥ १९१ ॥ अथागत्य स कोशायै, रत्नकम्बलमार्पयत् ॥ गृहनिर्धमने साऽपि, तं निचिक्षेप पङ्किले ॥ १९२ ॥ विषण्णो वीक्ष्य तत्साधु-रित्यूचे सुन्दरि ! त्वया ॥ महामूल्योऽप्यसौ पङ्के, किं क्षिप्तो रत्नकम्बलः ? ॥ १९३ ॥ कोशा शशंस यद्येत—ज्जानासि त्वं तदा कथम् ॥ आत्मानं गुणरत्नाढ्यं, क्षिपसि ? श्वभ्रकर्दमे ॥ १९४ ॥ किञ्च रत्नत्रयमिदं, भुवनत्रयदुर्लभम् ॥ मदङ्गे खालजम्बाल-कल्पे क्षिपसि किं मुधा ? ॥ १९५ ॥ तच्छ्रुत्वोत्पन्नवैराग्यः, कोशामिति जगौ यतिः ॥ संसाराब्धौ पतत्साधु, रक्षितोऽहं त्वयाऽनघे ! ॥ १९६ ॥ अतिचारो-

१ भीत । २ चौराणाम् । ३ जलनिर्गमनद्वारे 'वाळ' इति भा० । ४ पङ्कः अस्ति अस्य इति पङ्किल. । ५ नरक एव कर्दमः ( पङ्क ) तस्मिन् । ६ मातङ्गनरशो ।

करालं ते महर्षयः । सुभिक्षसम्भवे भूयः पाटलीपुत्रमाययुः ॥२२९॥ गुणनाभावतस्तेषां सिद्धान्तो विस्मृतस्तदा । शास्त्रे स्वामिनि सुन्दर्यां न स्थैर्यं जायते यतः ॥ २३० ॥ सारं सारं परावर्त्यैकादशाङ्गी यतिव्रजैः । यत्नतो मेलिता यस्मादनिर्विण्णं[3] श्रियः पदम् ॥ २३१ ॥ तदा नेपालदेशेऽभूद्, द्वादशाङ्गधरो गुरुः । भद्रबाहुर्धृतमहा–प्राणध्यानो युगोत्तमः ॥ २३२ ॥ सङ्घाटकेन[2] सङ्घस्त, पूर्वाण्यध्यापयेत्यवक् । पत्तनेऽत्र समागत्य, स्थूलभद्रादिकान् मुनीन् ॥ २३३ ॥ सोऽप्युवाच महाप्राणं, ध्यानमारब्धमस्ति यत् । साध्य द्वादशभिर्वर्षै[4]–र्नागमिष्याम्यहं ततः ॥२३४॥ महाप्राणे हि निष्पन्ने, कार्ये कस्मिंश्चिदागते । सर्वपूर्वाणि गुण्यन्ते, सूत्रार्थभ्यां मुहूर्ततः ॥ २३५ ॥ तद्वचस्तौ मुनी गत्वा, सङ्घस्याशंस तामथ । सङ्घोऽप्यपरमाहूयादिदेशेति मुनिद्वयम् ॥ २३६ ॥ गत्वा वाच्यः स आचार्यो, यः सङ्घस्य शासनम् । न करोति भवेत्तस्य, दण्डः क इति शंस नः ॥ २३७ ॥ सङ्घबाह्यः स कर्तव्य, इति वक्ति यदा स तु । तर्हि तद्दण्डयोग्योसीत्याचार्यो वाच्य उच्चकैः ॥ २३८ ॥ ताभ्यां गत्वा तथैवोक्त, आचार्योऽप्येवमूचिवान् । नैवं करोतु भगवान्, सङ्घः किन्तु करोत्वदः ॥ २३९॥ शिष्यान् प्रेषयतु प्राज्ञान्, पाठयाम्यशठो यथा । श्रीजिनाज्ञेव सङ्घाज्ञा मान्या मानवतामपि ॥ २४० ॥ तत्रैकां वाचनां दास्ये, भिक्षाचर्यात आगतः । तिसृषु कालवेलासु, तिस्रोऽन्या वाचनास्तथा ॥ २४१ ॥ सायाह्नप्रतिक्रमणे, जाते तिस्रोऽपराः पुनः । सेत्स्यत्येवं सङ्घकार्यं मत्कार्यस्याविबाधया ॥२४२॥ एवं सप्ताह्नि दास्येऽहं, वाचनाः शिष्यसंहतेः । ध्यानमध्येऽपि येनोक्तः, परार्थः स्वार्थतोऽधिकः ॥ २४३ ॥ ध्यानस्य तस्य पर्यन्ते, वाचनाः सकलं दिनम् । प्रदास्यामीत्युदित्वाऽसौ, व्यसृजत्तन्मुनिद्वयम् ॥ २४४ ॥ ताभ्यामेत्य तथाख्याते, श्रीसङ्घोऽपि प्रसादभाक् प्राहिणोत्स्थूल-

१ भयङ्करम् । २ साधुसमूहै. । ३ अनुत्साहरहितत्वं । ४ मुनियुग्मेन ।

पाठोऽतिकठिनो यतः ॥२४५॥ साऽप्येतुमक्षमाऽत्यर्थं, वाचनानामभावतः । पराभज्यागमत्पश्चात्, भद्रादिसाधु पञ्चशतीं ततः ॥२४६॥ ... सिद्धिं सर्वाऽपि येन स्याद्, ध्रुवमेकाग्रचेतसाम् ॥२४७॥ प्राज्ञः ॥ २४६ ॥ एक एव स्थितस्तत्र, स्थूलभद्रः स्थिराशयः । सिद्धिं सर्वाऽपि येन स्याद्, ध्रुवमेकाग्रचेतसाम् ॥२४७॥ प्राज्ञः श्रीस्थूलभद्रोऽपि भद्रबाहुपदान्तिके । अपाठीदष्टभिर्वर्षैः, पूर्वाणामष्टकं तदा ॥ २४८ ॥ किमुद्वेजनेस्त्वमित्युक्तः, सूरिणासोऽत्र-वीदिदम् । नोद्विजे भगवन् किन्तु, ममाल्पा एव वाचना ॥२४९॥ सूरिरुचे मम ध्यानं, पूर्णप्रायमिदं ततः । तदन्ते वाचनास्तुभ्यं, प्रदास्यामि त्वदिच्छया ॥ २५० ॥ अप्राक्षीत्स्थूलभद्रोऽपि, विनयात्तं मुनीश्वरम् । भगवन् ! किं मयाऽधीतं, शेषं वा किमु तिष्ठति ? ॥ २५१ ॥ भद्रबाहुस्तत स्माह, वत्स ! स्वच्छमते ! शृणु । अधीतं सर्षपं मेरुं, शेषं बुध्यस्व धीनिधे ! ॥ २५२ ॥ श्रुत्वेति यत्नतः सोऽपि, पठति स्म तदन्तिके । यतः पूर्वं श्रुतज्ञानं, संयमश्च ततः परम् ॥ २५३ ॥ सूरिरप्यन्वहं प्राज्ञं, प्रपाठयति तं मुदा । यतः सुक्षेत्रमासाद्य, बीजं को न वपेद् बुधः ? ॥ २५४ ॥ पूर्णे ध्याने महाप्राणे, स्थूलभद्रो महामुनिः द्विवस्तूनानि पूर्वाणि दश यावत्समापयत् ॥ २५५ ॥ सूरयोऽथ समं तेन, विहरन्तो वसुन्धराम् ॥ पाटलीपुत्रमागच्छन्नैकत्रस्था हि साधवः ॥ २५६ ॥ इतश्च तत्रैव पुरे, स्थूलभद्रस्य जामयः । सप्तोपात्तव्रताः सन्ति, यक्षाद्याः शुभसंयमाः ॥२५७॥ अथोद्यानस्थितान् सूरीन्, स्थूलभद्रसमन्वितान् । ज्ञात्वा तान् वन्दितुं जग्मुर्धन्याः कस्यर्षयो हि न ? ॥ २५८ ॥ वन्दित्वा विधिवत्सूरि-पादद्वन्द्वं प्रमोदतः । ताः पप्रच्छुः प्रभो ! क्वास्ति, स्थूलभद्रो महामुनिः ॥ २५९ ॥ सूरयोऽप्यवदन्नस्ति, परत्र गुणयन्नसौ अद्रेरिव गणाङ्कीता, भवन्ति यतयो यतः ॥२६०॥ तत श्रुत्वा ता ययुस्तत्र, नन्तुं दूरेऽपि तं मुनिम् । गुणानुरागबद्धस्य दूरे हि किमु देहिनः ॥२६१॥ आयान्तीः

१ उद्विग्नः । २ उद्विजे । ३ पृथ्वीम् । ४ भगिन्यः ।

सोदरा वीक्ष्य, स किञ्चिद्गर्विताशयः । लब्धि दर्शयितुं स्वीयां, सिंहरूपोऽभवत्ततः ॥ २६२ ॥ दृष्ट्वा सिंहं तु भीतास्ताः, सूरिमेत्य व्यजिज्ञपन् । ज्येष्ठार्य जग्रसे सिंह–स्तत्र सोऽद्यापि तिष्ठति ॥२६३॥ ज्ञात्वोपयोगादाचार्यो–ऽप्यादिदेशेति गच्छत । वन्दध्वं तत्र वः सोऽस्ति, ज्येष्ठार्यो न तु केशरी ॥ २६४ ॥ ततोऽयुस्ताः पुनस्तत्र, स्वरूपस्थं निरूप्य च । ववन्दिरे स्थूलभद्रं, विनयाद्भक्तिभासुराः ॥२६५॥ सोऽपि स्वरूपमप्राक्षीत् स्वकुलस्याखिलं तदा । सहवासो निजैर्येन, कथानामाकरो मतः ॥ २६६ ॥ यक्षाऽप्युवाच भगवन्! भ्राता वः श्रीयकोऽन्यदा वैराग्यात् सममस्माभि–र्दीक्षामादत्त किन्त्वसौ क्षुधावान् सर्वदा कर्तुं नैकभक्तमपि क्षमः ॥२६७॥ षट्पदी । मयोक्तः पर्युषणायां, प्रत्याख्याह्यद्य पौरुषीम् । स प्रत्याख्यातवानुक्तो, मया पूर्णेऽवधौ पुनः ॥ २६८ ॥ त्वं प्रत्याख्याहि पूर्वार्धं पर्वेदमतिदुर्लभम् । इयान् कालः सुखं चैत्यपरिपाट्यापि यास्यति ॥२६९॥ प्रत्यपादि तथैवासौ, समयेऽभिहितः पुनः । तिष्ठेदानीमस्त्वपार्धमित्यकार्षीत्तथैव सः ॥२७०॥ प्रत्यासन्नाधुना रात्रिः, सुखं सुप्तस्य यास्यति । तत्प्रत्याख्याह्यभक्तार्थ–मित्युक्तः सोऽकरोत्तथा ॥ २७१ ॥ निशीथे क्षुत्तृषाव्याप्तः, सोऽजनिव्याकुलो भृशम् । नोष्णतापं हि सहते, कोमलः कुसुमोच्चयः ॥ २७२ ॥ गृहीतानशनः सोऽथ, स्मृतदेवगुरुक्रमः । समाधिमरणात्सद्यो, विपद्य त्रिदिवं ययौ ॥ २७३ ॥ ऋषिघातो मयाऽकारीत्युत्ताम्यन्ती ततस्त्वहम् । पुरः श्रमणसङ्घस्य, प्रायश्चिताय ढौकिता ॥२७४॥ सङ्घोऽप्याख्यद् व्यधायीदं, भवत्या शुद्धभावया, प्रायश्चित्तं ततो नेह । कर्तव्यं किञ्चिदस्ति ते, पापं लगति दुष्टेन, चेतसा तत्त्वास्ति न ॥ २७५ ॥ षट्पदी । यतः—

मन एव मनुष्याणां, कारणं बन्धमोक्षयोः । बन्धस्तु विषयासङ्गि, मुक्तिर्निर्विषयं मनः ॥२७६॥ अतः समाधिमाधाय, वचो-

---

१ भगिन्यः । २ सिंहः । ३ सकृदशनम् । ४ क्षुधा । ५ पुष्पसमूहः । ६ स्वर्गम् । ७ गता ।

मन्यस्व नोऽधुना । सङ्घोऽर्हतोऽपि मान्योऽयं, किं पुनः शेषदेहिनाम् ॥२७७॥ ततोऽहमित्यवोचं च, साक्षादाख्याति चेज्जिनः । ततो हृदयसंवित्तिर्जायते मम नान्यथा ॥२७८॥ अत्रार्थे सकलः सङ्घः, कायोत्सर्गमदादथ । एत्य शासनदेव्योक्तं, ब्रूत कार्यं करोमि किम् ॥ २७९ ॥ सङ्घोऽप्येवमभाषिष्ट, जिनपार्श्वमिमां नय । साख्यन्निर्विघ्नगत्यर्थं कायोत्सर्गेण तिष्ठत ॥ २८० ॥ सङ्घे तत्प्रतिपेदाने, सा माऽनैषीज्जिनान्तिके नत्वा पृष्टः प्रभुः स्माह । मुनिहत्याऽत्र नो तव, ततः प्रमुदिताऽवोचं, देहि प्रभो ! सुखादिकाम् ॥ २८१ ॥ स्वामिना मे स्वयं पञ्चपदी । भावना च विमुक्तिश्च, रतिकल्पमथापरम् । तथा विचित्रचर्येत्यध्ययनानां चतुष्टयम् ॥ २८२ ॥ दत्तं, श्रुतमेव धृतं मया । तत्तथाऽऽख्यानपूर्वं च, श्रीसङ्घाय समर्पितम् ॥ २८३ ॥ आचाराङ्गस्य चूले द्वे, आद्यमध्ययनद्वयम् । दशवैकालिकस्यान्यदथ सङ्घेन योजितम् ॥ २८४ ॥ इत्युदित्वा मुनिं नत्वा, मुदा ताः स्थानमाययुः । न तिष्ठन्ति चिरं कालं, यस्मात्क्वचः साधुसन्निधौ ॥ २८५ ॥ भगवान् स्थूलभद्रोऽपि, वाचनार्थमगाद्गुरुम् । सूरिर्दूनो भृशं तस्मिन्, वाचनां नो ददौ तदा ॥ २८६ ॥ प्रपच्छ कारणं सोऽथा–योग्योऽसीत्यादिशद्गुरुः । दीक्षादिनात्प्रभृत्येषोऽप्यपराधानचिन्तयत् ॥ २८७ ॥ चिन्तयित्वा च न ह्यागः, सरामीति जगाद च । कृत्वा न मन्यसे शान्तं, पापमित्यवदद्गुरुः ॥ २८८ ॥ स्थूलभद्रस्ततः सर्वसङ्घेनाऽमानयद्गुरुम् । महतां कुपितानां हि महान्तोऽलं प्रसादने ॥२८९॥ सूरिः सङ्घं बभाषेऽथ, विचक्रेऽसौ यथाऽधुना । तथाऽन्येपि करिष्यन्ति मन्दसत्त्वा अतः परम् ॥ २९० ॥ अवशिष्टानि पूर्वाणि, सन्तु मत्पार्श्व एव तु । अस्यास्तु दोषदण्डोऽयमन्यशिक्षाकृतेऽपि हि ॥२९१॥ स सङ्घेनाऽऽग्रहादुक्तो, विवेदेत्युपयोगतः । न मत्तः शेषपूर्वाणामुच्छेदो भाव्यतस्तु सः ॥ २९२ ॥ सूरिः प्रसन्न-

१ समाधान इत्यर्थः । २ प्रमादी भा ।

चित्तोऽथ, दत्त्वा शिक्षां यथोचिताम्। पुनस्तं पाठयामास, सन्तो हि नतवत्सलाः ॥२९३॥ नेदं देयं त्वयाऽन्यस्य, पुनः प्रोवाच तं गुरुः । स्तोकसत्त्वा यतः सत्त्वा, भाविनोऽतः परं भुवि ॥२९४॥ तथेति प्रतिपद्यासौ, तत्तथैवाकरोत्ततः । तेनोच्छिन्ना चतुष्पूर्वी, दशमान्तं द्विवस्तुयुक् ॥२९५॥ सोऽधीतद्वादशाङ्गोऽथ, सृजन् द्वादशधा तपः। भावना द्वादश ध्यायन् भातिस्म द्वादशात्मवत्॥२९६॥ गुरुर्योग्यममुं ज्ञात्वा, विश्वश्रीसङ्घसम्मतम् । सुदिने सुक्षणे स्वीये, पट्टेऽतिष्टिपदादरात् ॥ २९७ ॥ मसत्यग्रे वर्षशते, वीरमोक्षाद्गते सति । समाधिना ययौ स्वर्गं भद्रबाहुरपि प्रभुः ॥ २९८ ॥ [स्त्रीपरीषह इति श्रमणोघैः, स्थूलभद्रमुनिवत्सहनीयः ॥ मानसं हरि-गुहामुनिवन्न, त्वात्मनः शशिमुखीषु निधेयम् ॥ २९९ ॥] इतिस्त्रीपरिषहे स्थूलभद्रर्षिकथा ॥ ८ ॥

स्त्रीपरीषहश्चैकत्र वसतस्तादृशवशांजनसंसर्गवशान्मन्दसत्त्वस्य स्यादिति नैकत्र स्थाने स्थेयं, किन्तु ग्रामानुग्रामविहाररूपा चर्या कार्येति तत्परीषहमाह—

**मूलम्—एग एव चरे लाढे, अभिभूअ परीसहे । गामे वा नगरे वावि, निगमे वा रायहाणिए ॥ १८ ॥**

व्याख्या—एक एव रागादिरहित एव चरेत्, अप्रतिबद्धविहारेण विहरेत्, लाढयति प्रासुकैषणीयाहारेण यापयति आत्मानमिति लाढः, 'अभिभूय' निर्जित्य परीषहान् क्षुधादीन्, क्व चरेदित्याह—ग्रामे वा, नगरे वा, 'अपिः' पूरणे, 'निगमे वा' वणिग्निवासे, 'राजधान्यां वा' राज्ञो निवासपुर्यां, मडम्बाद्युपलक्षणश्चैतदिति सूत्रार्थः ॥ १८ ॥ पुनः प्रस्तुतमेवाह—

१ प्राणिनः । २ नाशं गताः । ३ रविवत । ४ सर्पं । ५ स्त्री ।

**मूलम्–असमाणो चरे भिक्खू, नेअ कुज्जा परिग्गहं। असंसत्तो गिहत्थेहिं, अणिकेओ परिव्वए ॥ १९ ॥**

व्याख्या—'असमानः' असदृशो गृहस्थैः सदाश्रयमूर्च्छारहितत्वेन, अन्यतीर्थिकैश्च सहानियतविहारादिना 'चरेत्' विहरेत् 'भिक्षुः' मुनिः कथमेतत्स्यादित्याह-नैव कुर्यात्परिग्रहं, ग्रामादिषु ममत्वरूपं, ममत्वाभावश्च कथं स्यादित्याह–'असंसक्तः' असम्बद्धो 'गृहस्थैः' गृहिभिः, 'अनिकेतः' गृहरहितः 'परिव्रजेत्' सर्वतो विहरेत्, गृहस्थसंसर्गादेरेव ग्रामादौ ममत्वं स्यादिति भाव इति सूत्रार्थः ॥ १९ ॥ आख्यानश्चात्र, तथाहि—

अभवन् भुवनाऽऽभोगं[1]–भासनाम्भोजपाणयः ॥ सूरयः सङ्गमाह्वाना, जिनाज्ञापालनोद्यताः ॥ १ ॥ उत्सर्गश्चापवादश्च विदन्तन्ते यथास्थितम् ॥ क्षीणजङ्घाबलास्तस्थुः, पुरे कोल्लकिराभिधे ॥ २ ॥ एकदा तत्र दुर्भिक्षे, सञ्जाते गच्छसंयुतम् ॥ सिंहाचार्य स शिष्यं ते, दूरदेशे व्यहारयन् ॥ ३ ॥ स्वयं तु तत्रैव पुरे, नव भागान् प्रकल्प्य ते ॥ विजहुर्मासकल्पादि–विधिना विधिवेदिनः ॥४॥ क्षीणजङ्घाबलत्वात्ते, तत्रस्था अपि न व्यधुः ॥ प्रतिबन्धं पुरश्राद्ध—कुलशय्यासनादिषु ॥ ५ ॥ प्रकृष्टांस्तद्गुणान् वीक्ष्य, पुराधिष्ठायिका सुरी ॥ तेषु भक्तिं दधौ प्राज्यां, भेजे तांश्च दिवानिशम् ॥ ६ ॥ वर्षान्तरे च तत्रागात्, प्रहितः सिंहसूरिणा ॥ सङ्गमाचार्यशुद्ध्यर्थं, तच्छिष्यो दत्तसञ्ज्ञकः ॥ ७ ॥ यत्र स्थितैस्तैराचार्यैर्–गच्छः प्रस्थापितोऽभवत् ॥ ते तत्रैवालयेऽभूवं–स्तदायाताः पुनः क्रमात् ॥ ८ ॥ तांश्च तत्र स्थितान् दृष्ट्वा, दुर्विदग्धशिरोमणिः[2] ॥ उत्सर्गैकरुचिर्दत्त–साधुरेवं व्यचिन्तयत् ॥ ९ ॥ तिष्ठन्तोऽत्रैव दृश्यन्ते, यदमी सूरयस्ततः ॥ मन्ये न भावतोऽप्येते, मासकल्पादि कुर्वते ॥ १० ॥ तदमीभिः सहैकत्र, ममोद्युक्तविहारिणः ॥ स्थातुं न

---

१ आभोगः सम्पूर्णः । २ मुर्खेषु अग्रेसरः ।

युक्तमित्यस्या—स्तपार्श्वस्थे स कुटीरके ॥ ११ ॥ पश्चाद्गत्वा सूरिपार्श्वे, सोऽनमत्तान्निरादरः ॥ साधुसौख्यविहारादि-वार्त्तां तैरप्यपृच्छ्यत ॥ १२ ॥ दत्तोऽपि सकलं सूरि-पृष्टं प्रोचे यथातथम् ॥ भिक्षाकाले च भिक्षार्थं, जगाम सह सूरिभिः ॥ १३ ॥ दत्तसाधुं सहादाय, सङ्घमस्थविरा अपि ॥ निस्सङ्गाः पर्यटन्ति स्म, प्रोच्चनीचकुलेषु ते ॥१४॥ कालदौःस्थ्यादटन्तोपि, नापुस्ते भैक्ष्यमुत्तमम् ॥ लेभिरे प्रान्तभैक्ष्यं तु, स्वल्पं स्वल्पं क्वचित् क्वचित् ॥ १५ ॥ ततो दत्तमुनिर्भैक्ष्यं, तथाविधमनाप्नुवन् ॥ कोपाविष्टो बभूवान्त-र्दुष्टश्चैवमचिन्तयत् ॥ १६ ॥ भ्रमयत्येष वृद्धो मां, प्रतिवेश्म निरर्थकम् ॥ सश्रद्धश्राद्धगेहानि, न दर्शयति मे पुनः ॥ १७ ॥ सूरयोपि तदाकूतं[1], ज्ञात्वा कोपेङ्गितादिभिः[2] ॥ तत्तुष्टिकारिभिक्षार्थ-मिभ्यश्रेष्ठिगृहं ययुः ॥१८॥ दुष्टरेवतिकासञ्ज्ञ-व्यन्तरीभिरुपद्रुतः ॥ तस्य च श्रेष्ठिनः पुत्रो, रुदन्नासीदहर्निशम् ॥१९॥ अगाच्च रुदतस्तस्य, षण्मासी न तु केचन ॥ उपायाः प्राभवंस्तत्र, मातापित्रादिकारिताः ॥ २० ॥ गत्वा तस्य शिशोः पार्श्वे, कृत्वा चप्पुटिकाध्वनिम् ॥ वत्स ! मारुदिहीत्यूचु-स्तदा सङ्घमसूरयः ॥२१॥ तेषां तद्वाक्यमाकर्ण्य, रेवत्यो भयविह्वलाः ॥ आशु नेशुः शिशुरपि, न रुरोद ततः परम् ॥ २२ ॥ तद्वीक्ष्य मुदितः श्रेष्ठी, मोदकैस्तान्न्यमन्त्रयत् ॥ हृद्या हि प्राप्यते भिक्षा, गुणैः परिचयेन वा ॥२३॥ दत्तायाऽदापयंश्चित्त-मोदकांस्तांश्च मोदकान् ॥ सूरिमुख्याः पुनर्नैक-मपि तं जगृहुः स्वयम् ॥२४॥ भ्रमन्मया समं पूर्णा-ऽऽहारो मा खिद्यतामसौ ध्यात्वेति वसतिं गन्तुं, व्यसृजन् गुरवोऽथ तम् ॥ २५ ॥ विशिष्टगृहमेकं मे, गुरवो दर्शयंश्चिरात् ॥ मां विसृज्याथ यास्यन्ति, सौधान् श्रेष्ठतरान् स्वयम् ॥ २६ ॥ चिन्तयन्निति दत्तर्षि-र्जगामोपाश्रयं निजम् ॥ स्वयं शठो हि सरल-मप्यन्यं मन्यते शठम् ॥२७॥ आचार्यास्तु चिरं भ्रान्त्वा, गृहीत्वा प्रान्तभोजनम् ॥

1 अभिप्रायम् । 2 हृदयगतभावादिभिः ।

आयघुः स्वाश्रयं द्वाव-प्याहारं च वितेनतुः ॥ २८ ॥ अथाऽऽवश्यककाले तं, प्रोचुः सद्गमसूरयः ॥ आलोचयतु भिक्षाया, दोषानद्यतनान् भवान् ॥२९॥ युष्माभिः सममेवाद्य, भिक्षायै हिण्डितोऽस्म्यऽहम् ॥ तत्किमालोचयामीति, दत्तेनोक्ते गुरुर्जगौ ॥३०॥ धात्रीचिकित्सापिण्डोऽद्य, भक्षितोस्ति त्वयैव यः ॥ तमालोचय तच्छ्रुत्वा, सकोप इति सोऽब्रवीत् ॥ ३१ ॥ अपि सर्षपमात्राणि, परच्छिद्राणि पश्यसि ! ॥ आत्मनो विल्वमात्राणि, पश्यन्नपि न पश्यसि ? ॥३२॥ द्रष्टुं स्वदोषान् लोकानां, नैकमप्यस्ति लोचनम् ॥ सन्ति लोचनलक्षाणि, परदोपविलोकने ॥ ३३ ॥ विब्रुवन्निति दत्तोऽगा-त्ततो निजकुटीरकम् ॥ तत्रस्थोऽपि च सूरीणां, दोषानेवं व्यचिन्तयत् ॥ ३४ ॥ तस्मै निन्दाकारिणेऽपि, नाकुप्यन् सूरयस्तु ते ॥ चुकोप किन्तु तद्भक्ता, पुराधिष्ठायिका सुरी ॥ ३५ ॥ ततस्तस्य कुशिष्यस्य, शिक्षायै विचकार सा ॥ मध्यरात्रे नीरवृष्टिं, सूचीदुर्भेददुर्दिनाम् ॥ ३६ ॥ सकर्करोत्करं रेणु-निकरं खरवायुना ॥ उत्क्षिप्योत्क्षिप्य चिक्षेप, तस्य चोपरि सा सुरी ॥ ३७ ॥ दत्तस्ततो भयभ्रान्त-स्वान्तो ध्वान्तावृतेक्षणः ॥ अन्धान्धुक्षिप्तवत्पश्यन्नपि नैक्षिष्ट किञ्चन ॥ ३८ ॥ वेपमानवपुः सोऽथ, भयव्याकुलया गिरा ॥ क्व सन्ति पूज्या इत्युच्चैः, सूरिसिंहानशब्दयत् ॥ ३९ ॥ ॥ ३९ ॥ शब्देन तादृशा भीतं, तं ज्ञात्वेति गुरुर्जगौ ॥ वत्सात्रागच्छ सोऽथाऽऽख्य-न्न वः पश्यामि तामसैः ॥ ४० ॥ ततस्तस्याङ्गुलीमेका-मामृश्यादीदृशद् गुरुः ॥ सा च दीपशिखेवोच्चै-र्दिदीपे तत्प्रभावतः ॥ ४१ ॥ तदृष्ट्वा व्यमृशद्दत्तो दोषदर्शी गुणेष्वपि ॥ निशि प्रदीपमप्यस्य-द्गुरवो रक्षयन्त्यमी ॥४२॥ तच्च तं चिन्तितं ज्ञात्वा-ऽवधिज्ञानेन देवता ॥ पुरो भूयेत्थमाचष्ट, रुष्टा निष्ठुरया गिरा ॥ ४३ ॥ चन्द्रोज्ज्वलचरित्रेषु, यद्गुरुष्वीदृशेष्वपि ॥ दोषान् पश्यसि तन्नास्ति, त्वत्तोऽन्यो भुवि दुर्जनः ॥ ४४ ॥ त्वमेवं

१ अन्धकार । २ कम्पमानशरीरः ।

सद्गुरुबिन्द-न्निदानीं लप्स्यसे क्षयम् ! ज्वालाजिह्वं ज्वलद्रुप-माक्रामन् शलभो यथा ॥४५॥ समतारसपीयूष-कुण्डं यद्यपि सूरयः॥ शक्तिमन्तोऽप्यऽमी निन्दा-फलं नो दर्शयन्ति ते ॥४६॥ तथापि गुरुपादाब्ज-भक्ताऽहं तव दुर्मते ! ॥ अधुना तदवज्ञाया, दर्शयामि द्रुतं फलम् ॥ ४७ ॥ तच्छ्रुत्वा जातभीर्दत्तो, निपत्य गुरुपादयोः ॥ स्वमन्तुं क्षमयामास, शरणीकृतवांश्च तान् ॥ ४८ ॥ गुरवोऽपि जगुर्वत्स ! मामैपीर्नास्ति ते भयम् ॥ उपशान्ता ततो देवी, तान्नत्वाऽगान्निजास्पदम ॥ ४९ ॥ नवभागविहाराद्या, गुरुणोक्तां निज-क्रियाम् ॥ श्रुत्वा दत्तोऽपि निश्शङ्को, गुरुभक्तोऽभवद् भृशम् ॥५०॥ यथा जरित्वेऽप्यहिष्ट चर्या-परीषहं सङ्गमसूरिरेवम् ॥ तथा मुनीन्द्रैः सकलैः स सह्यो, नीवृत्पुरादिप्रतिबन्धमुक्तैः ॥ ५१ ॥ इति चर्यापरीषहे सङ्गमाचार्यकथा ॥ ९ ॥

यथा च ग्रामादिष्वप्रतिबद्धेन चर्यापरीषहः सह्यते, तथा नैषेधिकी परीषहोऽपि देहादिष्वप्रतिबद्धेन सह्य इति तमाह—

**मूलम्—सुसाणे सुण्णगारे वा, रुक्खमूले व एगगो । अकुक्कुओ निसीएज्जा, न य वित्तासए परं ॥ २० ॥**

व्याख्या—श्मशाने प्रतीते, 'शून्यागारे वा' शून्यगृहे, 'वृक्षमूले वा' वृक्षाधोभूभागे, एकक उक्तरूपः, 'अकुत्कुचः' दुष्टचेष्टा-रहितो 'निषीदेत्' उपविशेत् । 'न च' नैव वित्रासयेत्, 'परम्'अन्यं मनुष्यादिकं, अयं भावः—श्मशानादौ एककोऽपि भूरिभैरवो-पसर्गाद्युपलम्भेऽपि न स्वयं बिभीयात्, न च विकृतस्वरशरीरविकारादिभिरन्येषां भयमुत्पादयेदिति सूत्रार्थः ॥ २० ॥ तत्र तिष्ठतः कदाचिदुपसर्गोत्पत्तौ किं कृत्यमित्याह—

**मूलम्—तत्थ से चिट्ठमाणस्स, उवसग्गाभिधारए । संकाभिओ न गच्छिज्जा, उट्ठित्ता अण्णमासणं ॥२१॥**

१ अग्निम् । २ पतङ्गः ।

व्याख्या—'तत्र' श्मशानादौ "से" तस्य तिष्ठत उपसर्गा दिव्याद्याः सम्भवेयुरिति शेषः । तानुपसर्गानामिचारयत्, किं मामेते
दृढमनसो मे करिष्यन्तीति चिन्तयन् सहेत, शङ्काभीरुस्तत्कृतापकारशङ्कातस्त्रस्तो 'न गच्छेत्' यायात् न 'उत्थाय' तत्स्थानमपहाय
'अन्यत्' अपरम् 'आसनम्' स्थानमिति सूत्रार्थः ॥ २१ ॥ दृष्टान्तश्चात्र, तथाहि—

अभूत्पुरे गजपुरे, कुरुदत्तसुताभिधः ॥ महेभ्यपुत्रो महतां, गुणानामेकमास्पदम्[1] ॥१॥ स संविग्नो गुरूपान्ते, प्रव्रज्याधीत्य च श्रुत ॥ प्रतिपेदेऽन्यदैकाकि–विहारप्रतिमां सुधीः ॥२॥ विहरन्नेकदा सोऽथ, साकेतनगरान्तिके ॥ तस्थौ प्रतिमया तुर्य–पौरुष्यां धैर्यमन्दरः[2] ॥ ३ ॥ ततश्च गोधनं हृत्वा, चौरा ग्रामात्कुतश्चन ॥ कुरुदत्तसुतर्षेः, पार्श्वस्थेनाऽध्वना[3] ययुः ॥ ४ ॥ साधुपार्श्वमथाऽभ्येयु–र्गोधनान्वेषका अपि । द्वौ मार्गौ तत्र दृष्ट्वा ते, पप्रच्छुश्चेति तं मुनिं ॥५॥ ब्रूहि साधो! पथा केन, जग्मुश्चौराः सगोधनाः ॥ तच्छ्रुत्वापि मुनिस्तेषां, न ददौ किञ्चिदुत्तरं ॥ ६ ॥ ततस्ते कुपिता वारि–क्लिन्नामादाय मृत्तिकां ॥ मौलौ तस्य मुनेः पालीं, बबन्धुर्दुष्टचेतसः ॥ ७ ॥ तत्र क्षिप्त्वा चिताङ्गारान्, ययुस्ते क्रोधविह्वलाः ॥ मुनिस्तु तैर्ज्वलन्मौलि–रप्येवं ह्यचिन्तयत् ॥ ८ ॥ " सह कलेवर! खेदमचिन्तयन्, स्ववशता[4] हि पुनस्तव दुर्लभा ॥ बहुतरं च सहिष्यसि जीव हे!, परवशो न च तत्र गुणोऽस्ति ते ॥ ९ ॥ " ध्यायन्निति यतिमौलि, मनश्चाकम्पयन्नहि ॥ सहित्वा चोपसर्गं तं, परलोकमसाधयत् ॥ १० ॥ नैषेधिक्याः परीषहः, श्रीमुनिराजेन यथाऽमुनाऽधिसेहे ॥ सकलैरपि साधुभिस्तथाऽसौ, सहनीयो महनीयपादपद्मैः[5] ॥ ११ ॥

॥ इति नैषेधिकीपरीषहे कुरुदत्तसुतर्षिकथा ॥

---

१ स्थानम् । २ धैर्यपर्वतः । ३ मार्गेण । ४ स्वाधिनता । ५ पूजनीय ।

नैषेधिकीतश्च स्वाध्यायादि कृत्वा शय्यामागच्छेदिति शय्यापरीषहमाह—

मूलम्–उच्चावयाहिं सिज्जाहिं, तवस्सी भिक्खु थामवं । नाइवेलं णिहण्णेज्जा, पावदिट्ठी विहण्णइ ॥ २२ ॥

व्याख्या—'उच्चाः' शीतातपनिवारकत्वादिभिर्गुणैरुत्कृष्टाः, तद्विपरीतास्त्ववचाः, उच्चाश्चावचाश्च, उच्चावचास्ताभिः 'शय्याभिः' वसतिभिः 'तपस्वी' तपःकर्त्ता, 'भिक्षुः' मुनिः 'स्थामवान्' शीतातपादि सहनं प्रति सामर्थ्यवान् 'न' नैव 'अतिवेलम्' स्वाध्यायादि वेलातिक्रमेण 'विहन्यात्' हन्तेर्गतावपि प्रवृत्तेरत्राहं शीतादिभिरभिभूत इति स्थानान्तरं गच्छेत् । यद्वा 'अतिवेलम्' अन्यसमयातिशायिनीं मर्यादां समतारूपां उच्चशय्यावाप्तौ अहो ! सभाग्योऽहं ! यस्येदृशी सर्वर्तुसुखदा शय्येति हर्षेण, अवचावाप्तौ च अहो ! मन्दभाग्योऽहं शय्यामपि सुन्दरां न लेभे इति विषादेन, 'न विहन्यात्' न लङ्घयेत् । कुतश्चैवमुपदिश्यत इत्याह—'पापदृष्टिः' पापबुद्धिः "विहण्णइ" इति–प्राकृतत्वाद् 'विहन्ति' उल्लङ्घते मर्यादामिति शेष इति सूत्रार्थः ॥ २२ ॥ किम्पुनः कुर्यादित्याह—

मूलम्–पइरिक्कं उवस्सयं, लध्धुं कल्लाणं अदुव पावगं । किमेगराइं करिस्सइ, एवं तत्थ हिआसए ॥ २३ ॥

व्याख्या–'प्रतिरिक्तम्' स्त्र्यादिविरहितम् 'उपाश्रयम्' वसतिं 'लब्ध्वा' प्राप्य, 'कल्याणम्' शोभनं 'अदुव'त्ति अथवा 'पापकम्' अशोभनं, किं न किञ्चित्सुखं दुखं चेति गम्यते, 'एकरात्रम्' एकां रात्रिं 'करिष्यति' विधास्यति कल्याणः पापको वा उपाश्रय इति प्रक्रमः । अयं भावः—केचित्सुकृतिनो मणिसुवर्णमयेषु विचित्रचित्रशालेषु सौन्दर्येन्दिराधरीकृतमन्दरेषु सप्तभौमादिमन्दिरेषु यावज्जीवं वसन्ति,

१ सौन्दर्यशोभया तिरस्कृतो मेरुर्येन स तेषु ।

तदन्ये तु जीर्णपर्णतृणादिमयेषु कोलोन्दरादिविलिखितभूतलेषु कुटीरकेषु, मम त्वद्यैवेयमेवंविधा वसतिः कल्ये त्वन्या भविष्यति
तत्किमत्र हर्षेण विपादेन वा । मया हि समभावार्थमेव व्रतमादृतम् 'एवम्' अनेन प्रकारेण 'तत्र' कल्याणे पापके वोपाश्रयेऽध्यासीत
सुखं दुःखं वा । जिनकल्पिकापेक्षश्चैकरात्रमिति, इतरापेक्षया तु कतिपयरात्रीरिति सूत्रार्थः ॥ २३ ॥ उदाहरणञ्चात्र तथाहि—

बभूव पूर्यां कौशाम्ब्यां यज्ञदत्ताभिधो द्विजः ॥ तस्याभूतां सोमदत्त–सोमदेवाभिधौ सुतौ ॥ १ ॥ सोमभूतिमुनेः
पार्श्वे, तौ द्वावपि महाशयौ ॥ प्राव्राजिष्टां भवोद्विग्ना–वभूतां च बहुश्रुतौ ॥ २ ॥ अन्यदा स्वजनान् द्रष्टुं, तौ कौशाम्बीमुपेयतुः ॥
स्वजनास्तु तदाऽवन्त्यां, गत्वाऽभूवन् स्थितास्तयोः ॥ ३ ॥ ततस्तावप्यचलता–मभिमालवकं मुनी ॥ पिबन्ति तत्र देशे च, मद्यं
केचिद्द्विजा अपि ॥ ४ ॥ तत्र ब्राह्मणगेहेषु, भिक्षार्थं गतयोस्तयोः ॥ द्रव्येणान्येन संयोज्य, मद्यं विप्रस्त्रियो ददुः ॥ ५ ॥ अन्ये
त्वाहुर्ददे ताभि–र्मद्यमेव यथास्थितम् ॥ तद्विशेषमजानन्ता–वपातां तच्च तावपि ॥ ६ ॥ वपुर्भ्रमादिना सीधुं, पीतं ज्ञात्वाथ तौ
मुनी ॥ जाताऽनुतापौ निष्पापौ, मिथो व्यमृशतामिति ॥ ७ ॥ अयुक्तमेतदावाभ्या–मजानद्भ्यां महत्कृतम् ॥ सुरामप्यऽपिबावाऽऽवां,
प्रमादादसमीक्ष्य यत् ॥ ८ ॥ सेवेताकल्प्यमप्येव–माहारार्थी कदाचन ॥ तदाहारपरीहार–मेवाऽऽवां कुर्वहेऽधुना ॥ ९ ॥ इत्या-
लोच्यापगातीर–गतकाष्ठोपरि स्थितौ ॥ तावकार्षां पादपोप–गमनं मुनिसत्तमौ ॥ १० ॥ अकालेऽपि तदा मेघ–वृष्टिर्जज्ञेऽतिभूयसी ॥
पूरयन्ती पयःपूरै–र्नदीं प्लावितसैकतैः ॥११॥ आरूढश्रमणं दारु, ततारोडुपवत्ततः ॥ उत्तेरतुस्ततो नैव, तदापि व्रतिनौ तु तौ ॥१२॥
गोऽथ सिन्धुरयः कूल–तरुन्मूलनतत्परः ॥ काष्ठारूढौ यती सद्य–स्तौ निनाय पयोनिधौ ॥ १३ ॥ उच्छलल्लोलकल्लोल–लोलनान्दो-

१ मदिराम् । २ तरी । ३ नदीवेगः ।

लनव्यथाम् ॥ उल्लोलोत्क्षिप्तकाष्ठौघा-भिघातश्चातिदारुणम् ॥ १४ ॥ जलजन्तुकृतां ग्रास-विबाधाश्चातिदुःसहाम् ॥ तत्र धीरमनस्कौ
ता-वक्षमेतां क्षमानिधी ॥ १५ ॥ [ युग्मम् ] यावज्जीवं विषह्येति, तीव्रं शय्यापरीषहम् ॥ देवभूयं सोमदत्त-सोमदेवाववविन्दताम्
॥ १६ ॥ तौ साधुसिंहौ सहतः स्म शय्या-परीषहं यद्वदहार्यधैर्यौ ॥ तथा विषह्यो मुनिभिः स सर्वैः, शमामृतक्षीरपयोधिकल्पैः
॥ १७ ॥ इति शय्यापरीषहे सोमदत्तसोमदेवर्षिकथा ॥ ११ ॥

शय्यास्थितस्य च कदाचित्तथाविधः शय्यातरोऽन्यो वा कश्चिदाक्रोशेदपि, तत आक्रोशपरीषहमाह—

**मूलम्—अक्कोसिज्ज परो भिक्खुं, न तेसिं पडिसंजले । सरिसो होई बालाणं, तह्मा भिक्खू न संजले ॥२४॥**

व्याख्या—'आक्रोशेत्' तिरस्कुर्यात् 'परः' अन्यो भिक्षुं, धिग् मुण्ड ! किमिह त्वमागतोसीत्यादिवाक्यैः, न "तेसिंति" सुपो वचनस्य च व्यत्ययात्तस्मै 'प्रति सञ्ज्वलेत्' प्रत्याक्रोशदानादिना वह्निवद्दीप्येत । चिन्तयेच्चैवं—'आक्रुष्टेन मतिमता, तत्त्वार्थालोचने मतिः कार्या ॥ यदि सत्यं कः कोपः, स्यादनृतं किं नु कोपेन ॥ १ ॥' किमेवमुपदिश्यत इत्याह—प्रतिसञ्ज्वलन् हि साधुः सदृशो भवति 'बालानाम्' अज्ञानां, तथाविधक्षपकवत् ॥

तथाहि क्वाप्यभूत्कश्चि-दनगारो गुणान्वितः ॥ तपोऽतिदुस्तपं मास-क्षपणादिकमाचरन् ॥१॥ तद्गुणावर्जिता कापि, तं ननाऽमाऽनिशं सुरी ॥ कार्यं मदुचितं पूज्यैः, प्रसाद्यमिति चाब्रवीत् ॥२॥ श्रुत्वा विप्रस्य कस्यापि, दुर्वाक्यं सोऽन्यदा मुनिः ॥ जातकोपः समं तेन, योद्धुं प्रववृतेतराम् ॥ ३ ॥ क्षुत्क्षामदेहः क्षपक—स्ततस्तेन द्विजन्मना ॥ हत्वा मुष्ट्यादिभिः पृथ्व्या-मपात्यत तरस्विना

१ महातरङ्गैः उत्क्षिप्तकाष्ठसमूहस्य प्रहारम् । २ भेत्तुमशक्यधैर्यौ ३ क्षुधादुर्बलदेहः । ४ बलवता ।

॥ ४ ॥ मुहुर्मुहुस्ताडयित्वा, द्विजेन मुमुचेऽथ सः ॥ ततः स्वस्थानमगम-त्क्षपकोऽपि कथञ्चन ॥ ५ ॥ तत्पार्श्वेऽथ विभावर्यां, विमो-
र्मिर्माधुरी सुरी ॥ समाजगाम तत्पादौ, प्रणनाम च पूर्ववत् ॥ ६ ॥ तां देवीं जल्पयामास, न किञ्चित्क्षपकः पुनः ॥ अजल्पन्तं च
तं साधु-मेवं पप्रच्छ देवता ॥ ७ ॥ त्वं न जल्पयसि स्वामि-न्नपराधात्कुतोऽद्य मां ? ॥ ततो वाचंयमोऽप्युच्चैः, प्रत्युवाचेति निर्जरीम्
॥ ८ ॥ द्विजेन हन्यमानोऽपि, यन्नाहं रक्षितस्त्वया ॥ ममापकारिणस्तस्य, किञ्चिन्नापकृतं च यत् ॥ ९ ॥ ततस्त्वां वादये नाहं,
वाच्यात्रप्रीतिकारिणीम् ॥ तच्छ्रुत्वेत्यवादेवी, स्मितविच्छुरिताधरा ॥ १० ॥ [ युग्मम् ] युवयोरभवद्युद्धं, यदान्योन्यविलग्नयोः तदा-
हमपि तत्रैवा-ऽभूवं कौतुकदर्शिनी ॥ ११ ॥ किन्तु तुल्यौ युवां दृष्टौ, कोपाविष्टौ मया तदा ॥ कः साधुः ? को द्विजश्चेति नाज्ञासि-
षमहं तदा ॥ १२ ॥ युष्मद्रक्षां विप्रशिक्षा-मत एव च न व्यधाम् ॥ श्रुत्वेति क्षपकः शान्त-कोपाऽऽटोपोऽब्रवीदिति ॥ १३ ॥ सूनृता
प्रगुणा देवि, त्वयाऽसौ विहिता मम ॥ तदमुष्यातिचारस्य, मिथ्यादुष्कृतमस्तु मे ॥ १४ ॥ ततो यतिं तं प्रणिपत्य सत्य-भक्त्या निजं
धाम जगाम देवी ॥ कुप्यन्मुनिः स्यादिति बालतुल्यो, नाक्रोशकारिष्वपि तेन कुप्येत् ॥ १५ ॥ इति क्षपककथा ॥

उक्तमेवार्थं निगमयितुमाह–'तम्हत्ति' यस्माद्बालानां सदृशो भवति तस्माद्भिक्षुर्न सञ्ज्वलेदिति सूत्रार्थः ॥ २४ ॥ कृत्योपदेशमाह—

**मूलम्–सोच्चाणं फरुसा भासा, दारुणा गामकंटया । तुसिणीओ उवेहेज्जा, न ताओ मणसी करे ॥२५॥**

व्याख्या–श्रुत्वा 'णमिति' वाक्यालङ्कारे, 'परुषाः' कर्कशा 'भाषाः' वाचः, दारयन्ति संयमविषयां धृतिमिति दारुणाः, तथा ग्राम

1 मुनि. । 2 रात्रौ । 3 कान्तिभिः । 4 दीक्षा । 5 साधुः । 6 देवीं । 7 स्मितेन विकसिताधरा । 8 सत्या ।

श्राममविश्रामं, यक्षः श्रान्तोऽभवत्ततः। न तु तं द्रष्टुमैशिष्ट, दुर्दष्टथाऽर्कमुलूकवत् ॥ ३२ ॥ आदाय मुद्गरं मुक्त्वा—ऽर्जुनं यक्षोऽगमत्ततः ॥ अपि देवबलाद्धर्म—बलमेव विशिष्यते ! ॥ ३३ ॥ मुक्तस्तेनार्जुनः पृथ्व्यां, पपात छिन्नशाखिवत् ॥ उदस्थौ च क्षणादङ्गं, मोटयन् गतनिद्रवत् ॥ ३४ ॥ किमकार्षं ? क्व स्थितोऽस्मि ?, का दशा मम विद्यते ? ॥ इति स ज्ञातवान्नैव, निद्रावस्थानुभूतवत् ॥ ३५ ॥ सोऽथाऽप्राक्षीत्स्वस्वरूपं, कृतोत्सर्गं सुदर्शनम् ॥ उपसर्गः शशामेति, सोऽप्युत्सर्गमपारयत् ॥ ३६ ॥ सर्वं तत्पूर्ववृत्तान्तं, तस्मै सम्यग् जगाद च ॥ तच्छ्रुत्वा जातनिर्वेदो—ऽर्जुनश्चिन्तितवानिति ॥ ३७ ॥ अहो ! अज्ञानिना घोरं, कर्मेदं नरकप्रदम् ! ॥ मया कृतमिति ध्यायन्, सोऽपृच्छदिति तं पुनः ॥ ३८ ॥ किमर्थं प्रस्थितोऽसि त्वं ?, ब्रूहि भ्रातः ! सुदर्शन ! ॥ सोऽभ्यधाच्छ्रीमहावीरं, वन्दनार्थं व्रजाम्यहम् ॥ ३९ ॥ तच्छ्रुत्वेत्यर्जुनोऽवादी—द्वन्दितुं परमेश्वरम् ॥ अहमप्यागमिष्यामि, त्वया सह महामते ! ॥ ४० ॥ ततस्तेन समं हृष्टः, श्रीमहावीरसन्निधौ ॥ अगात्सुदर्शनः स्वामि—दर्शनोत्सुकदर्शनः ॥ ४१ ॥ श्रीवर्द्धमानतीर्थेश—पादपद्मौ प्रणम्य तौ ॥ सम्यक् शुश्रुवतुर्धर्म—देशनां क्लेशनाशिनीम् ॥ ४२ ॥ देशनान्ते च सर्वज्ञं, प्रणम्यापृच्छदर्जुनः ॥ स्वामिन् ! कथं विशुद्धिर्मे, भवेद्बहुलपाप्मनः ॥४३॥ अथोचे भगवांस्त्वं चे-दात्मशुद्धिं चिकीर्षसि ॥ तर्हि संयममादाय, तपस्तप्यस्व दुस्तपम् ॥ ४४ ॥ मलं स्वर्णगतं वह्नि—र्हंसः क्षीरगतं जलम् ॥ यथा पृथक्करोत्येवं, जन्तोः कर्ममलं तपः ॥ ४५ ॥ यथाऽम्बुदा विलीयन्ते, प्रचण्डपवनाऽऽहताः ॥ तथा तीव्रतपोऽपास्ताः, पाप्मानः प्रबला अपि ॥ ४६ ॥ तन्निशम्यार्जुनः स्वामि—समीपे व्रतमाददे ॥ निर्जरार्थं व्यहार्षीच्च, पुरे राजगृहे सदा ॥ ४७ ॥ निरन्तरं षष्ठतपः, कुर्वन् सौम्यसुधाम्बुधिः ॥ साध्वाचारं च सकलं,

१ घूकवत् । २ वृक्षवत् । ३ खेदः । ४ पापिनः । ५ मेघाः । ६ समता ।

निष्कलङ्कमपालयत् ॥ ४८ ॥ असत्स्वजनहन्ताऽसौ, दुष्टो दुष्कर्मदूषितः ॥ धूर्तो धत्तेऽधुना साधु-वेषं वेषविडम्बकः ! ॥ ४९ ॥ इत्याद्यैर्बहुलोकोक्त-राक्रोशैस्ताडनैस्तथा ॥ स महात्मा न चुक्षोभ, प्रत्युतैवमचिन्तयत् ॥ ५० ॥ [युग्मम्] "मन्निन्दया यदि जनः परितोषमेति, नन्वप्रयासजनितोऽयमनुग्रहो मे ॥ श्रेयोऽर्थिनो हि मनुजाः परतुष्टिहेतो-र्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ ५१ ॥" किञ्च "अक्कोसहणणमारण-धम्मब्भंसाण बालसुलहाणं ॥ लाभं मण्णइ धीरो, जहुत्तराणं अलाभम्मि ॥ ५२ ॥" इति ध्यायन् स षण्मासीं, सोढाक्रोशपरीषहः ॥ कृतकर्मक्षयः प्राप, केवलज्ञानमुज्ज्वलम् ॥ ५३ ॥ ततश्चिरं स प्रतिबोध्य भव्यान्, मुक्तिं ययावर्जुनमालिसाधुः ॥ एतद्वदाक्रोशपरीषहोऽन्यै-रपि क्षमाढ्यैः श्रमणैर्विषह्यः ॥ ५४ ॥

इत्याक्रोशपरीषहेऽर्जुनमालिकर्षिकथा ॥ १२ ॥

अथ कश्चिदाक्रोशमात्रदानेनातुष्यन् वधमपि विदध्यादिति वधपरीषहमाह—

**मूलम्—हओ न संजले भिक्खु, मणंपि न पओसए। तितिक्खं परमं नच्चा, भिक्खुधम्मं विचिंतए ॥२६॥**

व्याख्या—'हतः' यष्ट्यादिभिस्ताडितः 'न सञ्ज्वलेत्' कायतः कम्पनप्रत्याहननादिना, वचनतश्च प्रत्याक्रोशदानादिना ज्वलन्तमिवात्मानं नोपदर्शयेद्भिक्षुः 'मनः' चित्तं तदपि 'न प्रदूषयेत्' न कोपादिकृतं कुर्वीत, किन्तु, 'तितिक्षाम्' क्षमां 'परमाम्' धर्मसाधनं प्रति प्रकर्षवर्तीं 'ज्ञात्वा' अवगत्य 'भिक्षुधर्मम्' यतिधर्मं क्षान्त्यादिरूपं वस्तुस्वरूपं वा 'विचिन्तयेत्' भावयेच्च क्षमामूल एव मुनिधर्मो, यच्च मन्निमित्तमयं कर्मोपचिनोति, सोऽपि ममैव दोष इति नैनं प्रति कोप उचित इति सूत्रार्थः ॥ २६ ॥

१ आक्रोशहननमारणधर्मभ्रंशानां बालसुलभानां। लाभं मन्यते धीरः यथोत्तराणामलाभे।

मुद्गरं मुक्त्वा-ऽर्जुनं यक्षोऽगम- दुर्दृष्टयाऽर्कमुलूकवत् ॥ ३२ ॥ आदाय मुद्गरं मुक्त्वा-ऽर्जुनं यक्षोऽगम-
ाममविश्रामं, यक्षः श्रान्तोऽभवत्ततः। न तु तं द्रष्टुमैशिष्ट, दुर्दृष्टयाऽर्कमुलूकवत् ॥ ३२ ॥ आदाय मुद्गरं मुक्त्वा-ऽर्जुनं यक्षोऽगम-
ततः ॥ अपि देवबलाद्धर्म-बलमेव विशिष्यते ! ॥ ३३ ॥ मुक्तस्तेनार्जुनः पृथ्व्यां, पपात च्छिन्नशाखिवत् ॥ उत्तस्थौ च
क्षणादङ्गं, मोटयन् गतनिद्रवत् ॥ ३४ ॥ किमकार्षं ? क स्थितोऽस्मि ?, का दशा मम विद्यते ? ॥ इति स ज्ञातवान्नैव, निद्रावस्था-
नुभूतवत् ॥ ३५ ॥ सोऽथाऽप्राक्षीत्स्वरूपं, कृतोत्सर्गं सुदर्शनम् ॥ उपसर्गः शशामेति, सोऽप्युत्सर्गमपारयत् ॥ ३६ ॥ सर्वं तत्पूर्व-
वृत्तान्तं, तस्मै सम्यग् जगाद च ॥ तच्छ्रुत्वा जातनिर्वेदो-ऽर्जुनश्चिन्तितवानिति ॥ ३७ ॥ अहो ! अज्ञानिना घोरं, कर्मेदं नरकप्रदम् !
॥ मया कृतमिति ध्यायन्, सोऽपृच्छदिति तं पुनः ॥ ३८ ॥ किमर्थं प्रस्थितोसि त्वं ?, ब्रूहि भ्रातः ! सुदर्शन ! ॥ सोऽभ्य-
धाच्छ्रीमहावीरं, वन्दनार्थं व्रजाम्यहम् ॥ ३९ ॥ तच्छ्रुत्वेत्यर्जुनोऽवादी-द्वन्दितुं परमेश्वरम् ॥ अहमप्यागमिष्यामि, त्वया सह
महामते ! ॥ ४० ॥ ततस्तेन समं हृष्टः, श्रीमहावीरसन्निधौ ॥ अगात्सुदर्शनः स्वामि-दर्शनोत्सुकदर्शनः ॥ ४१ ॥ श्रीवर्द्धमान-
तीर्थेश—पादपद्मौ प्रणम्य तौ ॥ सम्यक् शुश्रुवतुर्धर्म-देशनां क्लेशनाशिनीम् ॥ ४२ ॥ देशनान्ते च सर्वज्ञ, प्रणम्याप्रच्छदर्जुनः ॥
स्वामिन् ! कथं विशुद्धिर्मे, भवेद्बहुलपाप्मनः ॥४३॥ अथोचे भगवांस्त्वं चे-दात्मशुद्धिं चिकीर्षसि ॥ तर्हि संयममादाय, तपस्तप्यस्व
दुस्तपम् ॥ ४४ ॥ मलं स्वर्णगतं वह्नि-र्हंसः क्षीरगतं जलम् ॥ यथा पृथक्करोत्येवं, जन्तोः कर्ममलं तपः ॥ ४५ ॥ यथाऽम्बुदा
विलीयन्ते, प्रचण्डपवनाऽऽहताः ॥ तथा तीव्रतपोऽपास्ताः, पाप्मानः प्रबला अपि ॥ ४६ ॥ तन्निशम्यार्जुनः स्वामि-समीपे
॥ व्रतमाददे। निर्जरार्थं व्यहार्षीच्च, पुरे राजगृहे सदा ॥ ४७ ॥ निरन्तरं षष्ठतपः, कुर्वन् साम्यसुधाम्बुधिः ॥ साध्वाचारं च सकलं,

१ घूकवत् । २ वृक्षवत् । ३ खेद । ४ पापिनः । ५ सेवा. । ६ समता ।

निष्कलङ्कमपालयत् ॥ ४८ ॥ असत्स्वजनहन्ताऽसौ, दुष्टो दुष्कर्मदूषितः ॥ धूर्तो धत्तेऽधुना साधु-वेषं वेषविडम्बकः ! ॥ ४९ ॥ इत्याद्यैर्बहुलोकोक्ति-राक्रोशैस्ताडनैस्तथा ॥ स महात्मा न चुक्षोभ, प्रत्युतैवमचिन्तयत् ॥ ५० ॥ [युग्मम्] " मन्निन्दया यदि जनः परितोषमेति, नन्वप्रयासजनितोऽयमनुग्रहो मे ॥ श्रेयोऽर्थिनो हि मनुजाः परतुष्टिहेतो-र्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ ५१ ॥" किञ्च "अक्कोसहणणमारण-धम्मब्भंसाण बालसुलहाणं ॥ लाभं मण्णइ धीरो, जहुत्तराणं अलाभंमि ॥ ५२ ॥" इति ध्यायन् स षण्मासीं, सोढाक्रोशपरीषहः ॥ कृतकर्मक्षयः प्राप, केवलज्ञानमुज्ज्वलम् ॥ ५३ ॥ ततश्चिरं स प्रतिबोध्य भव्यान्, मुक्तिं ययावर्जुनमालिसाधुः ॥ एतद्वदाक्रोशपरीषहोऽन्यै-रपि क्षमाढ्यैः श्रमणैर्विषह्यः ॥ ५४ ॥

इत्याक्रोशपरीषहेऽर्जुनमालिकर्षिकथा ॥ १२ ॥

अथ कश्चिदाक्रोशमात्रदानेनातुष्यन् वधमपि विदध्यादिति वधपरीषहमाह—

**मूलम्–हओ न संजले भिक्खु, मणंपि न पओसए। तितिक्खं परमं नच्चा, भिक्खुधम्मं विचिंतए ॥२६॥**

व्याख्या—'हतः' यष्ट्यादिभिस्ताडितः 'न सञ्ज्वलेत्' कायतः कम्पनप्रत्याहननादिना, वचनतश्च प्रत्याक्रोशदानादिना ज्वलन्तमिवात्मानं नोपदर्शयेद्भिक्षुः 'मनः' चित्तं तदपि 'न प्रदूषयेत्' न कोपादिकृतं कुर्वीत, किन्तु, 'तितिक्षाम्' क्षमां 'परमाम्' धर्मसाधनं प्रति प्रकर्षवर्तीं 'ज्ञात्वा' अवगत्य 'भिक्षुधर्मम्' यतिधर्मं क्षान्त्यादिरूपं वस्तुस्वरूपं वा 'विचिन्तयेत्' भावयेच्च क्षमामूल एव मुनिधर्मो, यच्च मन्निमित्तमयं कर्मोपचिनोति, सोऽपि ममैव दोष इति नैनं प्रति कोप उचित इति सूत्रार्थः ॥ २६ ॥

1 आक्रोशहननमारणधर्म-भ्रंशानां बालसुलभानां। लाभं मन्यते धीरः यथोत्तराणामलाभे।

अमुमेवार्थं प्रकारान्तरेणाह—

**मूलम्—समणं संजयं दंतं, हणेज्जा कोवि कत्थइ । नत्थिजीवस्स नासोत्ति, एवं पेहिज्ज संजए ॥ २७ ॥**

व्याख्या–'श्रमणम्' तपस्विनं 'संयतम्' पृथ्वीकायादिहिंसानिवृत्तं, इदञ्च लाभाद्यर्थं बाह्यवृत्त्यापि सम्भवेदत आह–दान्तमिन्द्रियनोइन्द्रियदमेन, 'हन्यात्' ताडयेत्कोऽपि तादृशो दुष्टः,कुत्रचिद्ग्रामादौ, तत्र किं कार्यमित्याह-नास्ति 'जीवस्य' आत्मन उपयोगलक्षणस्य 'नाशः' अभावः, शरीरस्यैव नाशात्। 'इतिः' पूर्णे, 'एवं' स्वरूपार्थे, प्रेक्षेत भावयेत् 'संयतः' साधुरिति सूत्रार्थः ॥२७॥ निदर्शनञ्चात्र, तथाहि–

अभून्नगर्यां श्रावस्त्यां, जितशत्रुर्महीपतिः ॥ सधर्मचारिणी तस्य, धारिणी सञ्ज्ञिकाऽभवत् ॥ १ ॥ गौरीशयोः स्कन्द इव, स्कन्दकोऽभूत्सुतस्तयोः ॥ पुरन्दरसुतादेश्या, पुरन्दरयशाः सुता ॥ २ ॥ तदा दण्डकिभूपोऽभू—त्कुम्भकारकृते पुरे ॥ पुरोहितस्तु तस्याऽऽसी–दभव्यः पालकाभिधः ॥ ३ ॥ तेन दण्डकिसञ्ज्ञेन, भूभर्ता भूरिभूतिना ॥ पुरन्दरयशाः कन्या, पितृभ्यां पर्यणायि सा ॥ ४ ॥ अन्यदा सुव्रतस्वामी भव्याम्भोजनभोऽध्वगः ॥ श्रावस्त्यां समवासार्षी–त्सुरासुरनमस्कृतः ॥५॥ धन्यंमन्यः स्कन्दकोऽगा–त्तं नन्तुं परमेश्वरम् ॥ श्रुत्वा तद्देशनां श्राद्ध–धर्मञ्च प्रत्यपद्यत ॥ ६ ॥ पुरोधाः पालकः सोऽथ, कुम्भकारकृतात्पुरात् ॥ केनचिद्राजकार्येण, श्रावस्त्यामन्यदाऽऽययौ ॥ ७ ॥ स च भूपसभामध्ये, कुर्वन्निर्ग्रन्थगर्हणाम् ॥ द्रुतं निरुत्तरीचक्रे, स्कन्दकेन महाधिया ॥ ८ ॥ पापः प्राप ततो द्वेषं, पालकः स्कन्दकोपरि ॥ अपकर्तुम्पुनःकिञ्चि–त्तस्य न प्राभवत्तदा ॥९॥ कृतप्रस्तुतकृत्योऽथ, पालकः स्वास्पदं ययौ ॥ जगाम न तु तच्चिता–त्कोपः स्कन्दकगोचरः ॥१०॥ अथ श्रीसुव्रतस्वामि–

१ पत्नी । २ पार्वतीमहादेवयोः । ३ इन्द्रपुत्रीतुल्या । ४ राज्ञा । ५ अत्यन्तैश्वर्यशालिना । ६ भास्करः । ७ निन्दाम् । ८ सम्बन्धिनः ।

पादान्ते दान्तमानसः ॥ प्राव्राजीत्स्कन्दकः साकं, मर्त्यानांपञ्चभिः शतैः ॥११॥ क्रमाद्बहुश्रुते जाते, स्कन्दके सुव्रतप्रभुः ॥ तस्मै
शिष्यतया तानि, पञ्च साधुशतान्यदात् ॥ १२ ॥ अन्येद्युः सुव्रतार्हन्तं, स्कन्दकः पृष्टवानिति ॥ व्रजाम्यहं स्वसुर्देश—मादेशः
स्याद्यदि प्रभोः ॥ १३ ॥ जगौ जगत्प्रभुस्तत्रो—त्पत्स्यते मारणान्तिकः ॥ सर्वेषामुपसर्गो व—स्तच्छ्रुत्वा स्कन्दकोऽवदत् ॥ १४ ॥
आराधनासाधको हि, नोपसर्गस्तपस्विनाम् ॥ दुःखायते महानन्द—महानन्दाभिलाषिणाम् ! ॥ १५ ॥ ततो ब्रूहि प्रभो !
तस्मि—न्नुपसर्ग उपस्थिते ॥ आराधका भविष्यामो, वयं यद्वा विराधकाः? ॥ १६ ॥ स्वामी स्माह त्वां विनाऽन्ये, सर्वेऽप्याराधका
इति ॥ स्कन्दकस्तन्निशम्येति, व्यमृशद्भृशमुत्सुकः ॥ १७ ॥ आराधका इयन्तः स्यु—र्विहारे यत्र साधवः ॥ नूनं स शुभ एवेति,
विचिन्त्य स्कन्दकोऽचलत् ॥ १८ ॥ क्रमाद्गत्वा कुम्भकार—कृते स सपरिच्छदः ॥ उद्याने समवासार्षी—त्तमश्रौषीच्च पालकः
॥ १९ ॥ ततः प्राग्वैरशुद्ध्यर्थ—मुद्याने तत्र पालकः ॥ प्रच्छन्नं गोपयामास, विविधायुधधोरणीम् ॥ २० ॥ इति दण्डकिराज्ञे
चा—ऽषडक्षीणमुवाच सः ॥ जितः परीषहैरत्र, स्कन्दकोऽस्ति समागतः ॥ २१ ॥ अयं स्वयं महावीर्य—श्चण्डदोर्दण्डविक्रमैः ॥ साधु-
वेषधरैर्युक्तो, भटानां पञ्चभिः शतैः ॥ २२ ॥ उद्याने गोपितैः शस्त्र—प्रकरैरतिदारुणैः ॥ त्वां वन्दितुं गतं हत्वा, राज्यमेतद्ग्रहीष्यति !
॥ २३ ॥ [युग्मम्] प्रत्ययश्चेन्न ते स्वामि—न्नस्मिन्मद्वचने भवेत् ॥ तदा तद्गोपिताऽस्त्राणि, गत्वोद्यानं विलोकय ! ॥ २४ ॥ एवं
व्युद्ग्राहितस्तेन, तदुद्यानं गतो नृपः ॥ स्थानेषु पालकोक्तेषु, नानास्त्राणि निरैक्षत ! ॥ २५ ॥ दृष्ट्वा तानि नृपः क्रुद्धो, मुनीन्सर्वा
नबन्धयत् ॥ अकार्यं विद्यते किञ्चि—न्नाऽविमृश्य विधायिनाम् ॥ २६ ॥ पापस्य पालकस्यैव, तान्निबद्ध्यार्पयन्नृपः ॥

१ मातङ्गानां । २ मोक्षाभिलाषिणाम् । ३ न विद्यते षट् अक्षीणि ( श्रोत्रेन्द्रियाणि ) यत्र, एकान्ते इत्यर्थः । ४ विपरितग्राहित ।

यत्तुभ्यं रोचते तत्त्व-मेषां कुर्यां इति ब्रुवन्! ॥ २७ ॥ मूषकानिव मार्जार—स्तान् प्राप्य मुदितोऽथ सः ॥ संयतान् संयतान्मर्त्य-पीडायन्त्रान्तिकेऽनयत् ॥२८॥ इति प्रोचे च रे! यूय-मिष्टं स्मरत दैवतम् ॥ इदानीं पीडयिष्यामि, यन्त्रेणानेन वोऽखिलान् ॥२९॥ ततस्ते साधवो धीरा, ज्ञातोपस्थितमृत्यवः ॥ जीविताशामृत्युभीति-विप्रमुक्ता मनस्विनः ॥ ३० ॥ गृहीतालोचना सम्यक्, मैत्रीभावमुपागताः ॥ पर्यन्ताराधनां सर्वे, विदधुर्विधिपूर्वकम्! ॥ ३१ ॥ [युग्मम्] मर्त्तव्यं कातरेणापि, धीरेणापि च भूस्पृशा ॥ द्विधापि नियते मृत्यौ, धीरैर्भाव्यं मनस्विभिः ॥ ३२ ॥ इत्यादि वदतोत्साह्य—मानाः स्कन्दकसूरिणा ॥ अभवंस्ते विशेषेण, स्वदेहेऽपि गतस्पृहाः! ॥ ३३ ॥ [युग्मम्] क्रूराशयः क्रूरकर्मा, क्रूरगीः पालकस्ततः ॥ एकैकं श्रमणं यन्त्रे, क्षेपं क्षेपमपीडयत् ॥३४॥ पीड्यमानान् विनेयान् स्वान्, वीक्ष्यान्तर्दह्यतामयम् ॥ इति स स्कन्दकं यन्त्र-पार्श्वे बद्धमधारयत् ॥ ३५ ॥ पीड्यमानानगाराङ्गो—च्छलच्छोणितविन्दुभिः ॥ समन्ताद्भ्रियमाणोऽपि, नाऽकुप्यत्स्कन्दकः पुनः! ॥ ३६ ॥ किन्तु साम्यसुधास्यन्द-भावितैः समयोचितैः ॥ वाक्यैर्निर्यामयामास, तानेवं स महाशयः! ॥३७॥ "भिन्नः शरीरतो जीवो, जीवाद्भिन्नश्च विग्रहः ॥ विदन्निति वपुर्नाशेऽप्यन्तः खिद्येत कः कृती? ॥ ३८ ॥ किञ्चाखिलो विपाकोऽय—मस्ति स्वकृतकर्मणः ॥ दुःखाय नोपसर्गस्त-त्सतां कर्मजिघांसताम् ॥३९॥ अवश्यं नाशिनो बाह्य—स्याङ्गस्याऽस्य कृते ततः ॥ कोपः कार्यो नान्तरङ्ग—ध्रुवधर्मधनापहः ॥ ४० ॥" स्कन्दकेनेति निर्याम्यमाना निर्मलमानसाः ॥ महात्मानो विपक्षे च, मित्रे च समदृष्टयः ॥ ४१ ॥ यन्त्रपीडनपीडां तां, क्षममाणाः क्षमाधनाः ॥ केवलं

१ आखून् । २ बिलाडः । ३ मुनीन् ४ बद्धान् । ५ रहिता. । ६ मर्त्येन । ७ शिष्यान् ८ देह । ९ अपह. नाशक. । १० शत्रौ । ११ क्षमा एव धनं येषां ते क्षमाधनाः मुनय. ।

प्राप्य कैवल्य-सुखं ते लेभिरे क्रमात् ! ॥ ४२ ॥ (युग्मम्) द्रुतं हतेषु तेनैवं, न्यूनपञ्चशतर्षिषु ॥ एकं क्षुल्लकमुद्दिश्य, पालकं स्कन्दकोऽवदत् ॥ ४३ ॥ अनुकम्प्यमिमं बालं, पीड्यमानं निरीक्षितुम् ॥ नाहं शक्ष्यामि नियतं, पूर्वं पीडय मां ततः ! ॥ ४४ ॥ तच्छ्रुत्वा पालकस्तस्य, भूरि दुःखविधित्सया ॥ गुरोः पश्यत एव द्राक्, प्राक् तं बालमपीडयत् ! ॥ ४५ ॥ शुक्लध्यानसुधाऽऽसारं-शान्तकर्महुताशनः ॥ बालः सोऽपि महासत्त्वो, महानन्दमविन्दत ! ॥ ४६ ॥ तद्वीक्ष्य स्कन्दकाचार्यः, क्रुद्धोऽन्तर्ध्यातवानिति ॥ अनेन सपरीवारः, पापेनाऽस्मि विनाशितः ! ॥ ४७ ॥ क्षुल्लकोऽपि हि मद्वाचा, क्षणमेकं न रक्षितः ॥ निग्राह्य एव पापोऽसौ, तन्मया गर्वपर्वतः ॥ ४८ ॥ अयं भूपोऽपि निग्राह्यो—स्मद्विनाशनिबन्धनम् ॥ उपेक्षाकारिणोऽस्माकं, वध्या जानपदा अपि ! ॥ ४९ ॥ तद्दुष्करस्य चेदस्य, भवेन्मत्तपसः फलम् ॥ तदाहं दाहकोऽमीषां, भूयासं माविजन्मनि ! ॥ ५० ॥ इत्थं कृतनिदानः स, पीडितस्तेन दुर्धिया ॥ मृत्वा वह्निकुमारेषु, सुरोऽभूत्परमर्द्धिकः ॥ ५१ ॥ पुरन्दरयशास्तत्र, दिने चैवमचिन्तयत् ॥ कुतो हेतोः पुरीमध्ये न दृश्यन्तेऽद्य माधवः ! ॥ ५२ ॥ इतश्च स्कन्दकमुने-रजोहरणमुत्तमम् ॥ रक्ताभ्यक्तं कर इति, जगृहे गृध्रपक्षिणा ॥ ५३ ॥ तद्रजोहरणं च द्राग्, भवितव्यनियोगतः ॥ पुरः पुरन्दरयशो-देव्या गृध्रो न्यपातयत् ॥ ५४ ॥ तच्चादायोद्वेष्टयन्ती, सा स्वयं परिकर्मितम् ॥ काम्बलं खण्डमद्राक्षी-द्भ्रातुः प्रव्रजतोऽर्पितम् ॥ ५५ ॥ चिह्नेन तेन च ज्ञात्वा, सोदरादीन् मुनीन् हतान् ॥ महतीमधृतिं प्राप्ता, माऽवादीदिति भूपतिम् ॥ ५६ ॥ रे साधुद्विष्ट ! पापिष्ठ !, विनङ्क्ष्यत्यधुना भवान् ॥ महर्षीणां सुराणां च नत्यवज्ञा शुभावहा ! ॥ ५७ ॥ इत्युदीर्येति दध्यौ चा-ऽधुनाऽहं व्रतमाददे ॥ अलं संसारवासेना-ऽमुना दुःखौघदायिना !

१ आगारो गेह । २ वह्नि॰ ३ नोक्षम् । ४ कारणम् । ५ जनपदे (देशे) भवाः । ६ रुधिरलिप्तम् । ७ बान्धवादीन् ।

यत्तुभ्यं रोचते तत्त्व-मेषां कुर्या इति ब्रुवन्! ॥ २७ ॥ मूषकानिव मार्जार—स्तान् प्राप्य मुदितोऽथ सः ॥ संयतान् संयतान्मर्त्य-
पीडायन्त्रान्तिकेऽनयत् ॥२८॥ इति प्रोचे च रे! यूय-मिष्टं स्मरत दैवतम् ॥ इदानीं पीडयिष्यामि, यन्त्रेणानेन वोऽखिलान् ॥२९॥
ततस्ते साधवो धीरा, ज्ञातोपस्थितमृत्यवः ॥ जीविताशामृत्युभीति-विप्रमुक्ता मनस्विनः ॥ ३० ॥ गृहीतालोचना सम्यक्, मैत्रीभा-
वमुपागताः ॥ पर्यन्ताराधनां सर्वे, विदधुर्विधिपूर्वकम्! ॥ ३१ ॥ [युग्मम्] मर्त्तव्यं कातरेणापि, धीरेणापि च भूस्पृशा ॥ द्विधापि
नियते मृत्यौ, धीरैर्भाव्यं मनस्विभिः ॥ ३२ ॥ इत्यादि वदतोत्साह्य—मानाः स्कन्दकसूरिणा ॥ अभवंस्ते विशेषेण, स्वदेहेऽपि
गतस्पृहाः! ॥ ३३ ॥ [युग्मम्] क्रूराशयः क्रूरकर्मा, क्रूरगीः पालकस्ततः ॥ एकैकं श्रमणं यन्त्रे, क्षेपं क्षेपमपीडयत् ॥३४॥ पीड्य-
मानान् विनेयान् स्वान्, वीक्ष्यान्तर्दह्यतामयम् ॥ इति स स्कन्दकं यन्त्र-पार्श्वे बद्धमधारयत् ॥ ३५ ॥ पीड्यमानानगाराङ्गो—च्छल
च्छोणितविन्दुभिः ॥ समन्ताद्ध्रियमाणोऽपि, नाऽकुप्यत्स्कन्दकः पुनः! ॥ ३६ ॥ किन्तु साम्यसुधास्यन्द-भावितैः समयोचितैः ॥
वाक्यैर्निर्यामयामास, तानेवं स महाशयः! ॥३७॥ "भिन्नः शरीरतो जीवो, जीवाद्भिन्नश्च विग्रहः ॥ विदन्निति वपुर्नाशेऽप्यन्तः
खिद्येत कः कृती? ॥ ३८ ॥ किञ्चाखिलो विपाकोऽय—मस्ति स्वकृतकर्मणः ॥ दुःखाय नोपसर्गस्त—स्सतां कर्मजिघांसताम् ॥३९॥
अवश्यं नाशिनो बाह्य—स्याङ्गस्याऽस्य कृते ततः ॥ कोपः कार्यो नान्तरङ्ग—ध्रुवधर्मधनापहः ॥ ४० ॥" स्कन्दकेनेति निर्याम्य-
माना निर्मलमानसाः ॥ महात्मानो विपक्षे च, मित्रे च समदृष्टयः ॥ ४१ ॥ यन्त्रपीडनपीडां तां, क्षममाणाः क्षमाधनाः ॥ केवलं

१ आखून् । २ बिलाड. । ३ मुनीन् ४ बद्धान् । ५ रहिताः । ६ मर्त्येन । ७ शिष्यान् ८ देह. । ९ अपह. नाशकः । १० शत्रौ ।
११ क्षमा एव धन येषा ते क्षमाधनाः मुनय॰ ।

प्राप्य कैवल्य-सुखं ते लेभिरे क्रमात् ! ॥ ४२ ॥ (युग्मम्) द्रुतं हतेषु तेनैवं, न्यूनपञ्चशतर्षिषु ॥ एकं क्षुल्लकमुद्दिश्य, पालकं स्कन्दकोऽवदत् ॥ ४३ ॥ अनुकम्प्यमिमं बालं, पीड्यमानं निरीक्षितुम् ॥ नाहं शक्ष्यामि नियतं, पूर्वं पीडय मां ततः ! ॥ ४४ ॥ तच्छ्रुत्वा पालकस्तस्य, भूरि दुःखविधित्सया ॥ गुरोः पश्यत एव द्राक्, प्राक् तं बालमपीडयत् ! ॥ ४५ ॥ शुक्लध्यानसुधाऽऽसारे-शान्तकर्महुताशनः ॥ बालः सोऽपि महासत्त्वो, महानन्दमविन्दत ! ॥ ४६ ॥ तद्वीक्ष्य स्कन्दकाचार्यः, क्रुद्धोऽन्तर्ध्यातवानिति ॥ अनेन सपरीवारः, पापेनाऽस्मि विनाशितः ! ॥ ४७ ॥ क्षुल्लकोऽपि हि मद्वाचा, क्षणमेकं न रक्षितः ॥ निग्राह्य एव पापोऽसौ, तन्मया गर्वपर्वतः ॥ ४८ ॥ अयं भूपोऽपि निग्राह्यो—स्मद्विनाशनिबन्धनम् ॥ उपेक्षाकारिणोऽस्माकं, वध्या जानपदा अपि ! ॥ ४९ ॥ तदुग्रस्य चेदस्य, भवेन्मत्तपसः फलम् ॥ तदाहं दाहकोऽमीषां, भूयासं माविजन्मनि ! ॥ ५० ॥ इत्थं कृतनिदानः स, पीडितस्तेन दुर्धिया ॥ मृत्वा वह्निकुमारेषु, सुरोऽभूत्परमर्द्धिकः ॥ ५१ ॥ पुरन्दरयशास्तत्र, दिने चैवमचिन्तयत् ॥ कुतो हेतोः पुरीमध्ये न दृश्यन्तेऽद्य साधवः ! ॥ ५२ ॥ इतश्च स्कन्दकमुने-रजोहरणमुत्तमम् ॥ रक्ताभ्यक्तं कर इति, जगृहे गृध्रपक्षिणा ॥ ५३ ॥ तद्रजोहरणं च द्राग्, भवितव्यनियोगतः ॥ पुरः पुरन्दरयशो-देव्या गृध्रो न्यपातयत् ॥ ५४ ॥ तच्चादायोद्वेष्टयन्ती, सा स्वयं परिकर्मितम् ॥ काम्बलं खण्डमद्राक्षी-द्भ्रातुः प्रव्रजतोऽर्पितम् ॥ ५५ ॥ चिह्नेन तेन च ज्ञात्वा, सोदरादीन् मुनीन् हतान् ॥ महतीमधृतिं प्राप्ता, नाऽवादीदिति भूपतिम् ॥ ५६ ॥ रे साधुद्विष्ट ! पापिष्ठ !, विनङ्क्ष्यत्यधुना भवान् ॥ महर्षीणां सुराणां च नत्यवज्ञा शुभावहा ! ॥ ५७ ॥ इत्युदीर्येति दध्यौ चा-ऽमुनाऽहं व्रतमाददे ॥ अलं संसारवासेना-ऽमुना दुःखौघदायिना !

१ आगतो मेघ. । २ यन्त्रिः ३ नोक्षम् । ४ कारणम् । ५ जनपदे (देशे) भवाः । ६ रुधिरलिप्तम् । ७ बान्धवादिन् ।

॥ ५८ ॥ चिन्तयन्तीति मा देवैः, सुव्रतस्वामिसन्निधौ ॥ नीताऽऽदाय परिव्रेज्यां, परलोकमसाधयत् ! ॥ ५९ ॥ ज्ञात्वाऽथाऽवधिना प्राच्य, स्ववृत्तं स्कन्दकामरः ॥ क्रोधाध्मातो देशयुक्त-मधाक्षीन्मङ्क्षु तत्पुरम् ॥ ६० ॥ ततोऽरण्यमभूद्देश-भूमौ दण्डक्रिभूपतेः ॥ अद्यापि दण्डकारण्य-मिति तत्प्रोच्यते बुद्धैः ॥ ६१ ॥ एकोनपञ्चशतसाधुवरैरवार्य-वीर्यैर्यथा वधपरीषह एष सोढः ! ॥ सह्यस्तथा यमपरैरपि साधुमुख्यैः, श्रीस्कन्दकश्रमणवन्न पुनर्विधेयम् ॥ ६२ ॥ इति वधपरीषहे सपरिवारस्कन्दकर्षिकथा ॥१३॥

परैरभिहतस्य च यतेस्तथाविधौषधादियाचितमेव स्यादिति तत्परीषहमाह—

मूलम्—दुक्करं खलु भो निच्चं, अणगारस्स भिक्खुणो । सव्वं से जाइअं होई, नत्थि किंपि अजाइअं॥२८॥

व्याख्या—'दुष्करम्' दुरनुष्ठेयं, खलुर्विशेषणे, निरुपकारिण इति विशेषं द्योतयति, 'भो' इत्यामन्त्रणे, 'नित्यम्' सर्वकालं यावज्जीवमित्यर्थः, 'अनगारस्य' भिक्षोः । किं तद्दुष्करमित्याह-यत्सर्वमाहारोपकरणादि 'से' तस्य याचितं भवति, नास्ति किञ्चिद्दन्तशोधनादिकमप्ययाचितमिति सूत्रार्थः ॥ २८ ॥ ततश्च—

मूलम्—गोअरग्गपविट्ठस्स, पाणी नो सुप्पसारए । सेओ अगारवासोत्ति, इइ भिक्खू न चिंतए ॥ २९ ॥

व्याख्या-गोचरो भिक्षाचर्या, तस्याग्रं गोचराग्रं, एषणा शुद्धग्राहितया प्रधानगोचर इत्यर्थः । तत्प्रविष्टस्य मुनेरिति गम्यं, 'पाणिः' हस्तो "नो" नैव सुप्रसारकः सुखेन प्रसारयितुं शक्यः । कथं हि निरुपकारिणा परः प्रतिदिनं प्रार्थयितुं शक्यते? उत्तरस्य 'इति' शब्दस्यात्र योगादित्यतो हेतोः 'श्रेयान्' प्रशस्यो 'अगारवासः' गार्हस्थ्यं, तत्र हि न कोऽपि प्रार्थ्यते, स्वभुजार्जितं च दीनादिभ्यः संविभज्य

१ दीक्षाम् ।

भुज्यते इत्येतद्भिक्षुर्न चिन्तयेत, यदुसावद्यो हि गृहवासः, कथं श्रेयानिति सूत्रार्थः ॥ २९ ॥ उदाहरणसम्प्रदायश्चात्र तथाहि—

अस्त्यत्र भरते स्वर्ण-मयी *त्रिदशनिर्मिता ॥ प्रतिबिम्बमिव स्वर्ग-लोकस्य द्वारका पुरी ॥१॥ [1]बलार्धचक्रिणौ राम-कृष्णाख्यौ विश्वविश्रुतौ ॥ तत्राऽभूतां वसुदेव—रोहिणीदेवकीसुतौ ॥ २ ॥ तौ च प्रद्युम्नशाम्बाद्यैः, सार्धकोटित्रयोन्मितैः ॥ युक्तौ कुमारैरन्यैश्च, कोटिशो यदुपुङ्गवैः ॥ ३ ॥ सुररामाभिरामाभिः[2] स्त्रीभिः सह सहस्रशः ॥ भोगाभोगान[3]भुञ्जातां, पूर्णाखिलमनोरथौ ॥ ४ ॥ (युग्मम्) अन्यदा द्वारकापुर्यां, केवलज्ञान[4]भास्करः ॥ भव्याब्जप्रतिबोधार्थं, श्रीनेमिः समवासरत् ॥ ५ ॥ तदा च श्रीनेमिनाथं, वन्दित्वा रामकेशवौ[5] ॥ समाकर्णयतां धर्म-देशनां सपरि[6]च्छदौ ॥ ६ ॥ देशनान्ते च सर्वज्ञं, प्रणम्यापृच्छदच्युतः ॥ अमुष्या द्वारकापुर्याः, स्वर्गाधिकारिसम्पदः ॥ ७ ॥ यदूनां मम चान्तः किं, भावी स्वत उतान्यतः ? ॥ ततो जगाद भगवान्, ज्ञानराशिरिवाङ्गवान् ॥ ८ ॥ बहिः शौर्यपुरात्पारा-सराह्वस्तापसोऽभवत् ॥ वीक्ष्यनीचकुलां काञ्चित्कन्यां सोऽभूत्स्मरातुरः ॥९॥ तया समं च यमुना-द्वीपे गत्वाऽऽरराम सः ॥ ततस्तयोरभूत्सूनु—र्व्रती द्वैपायनाह्वयः ॥ १० ॥ स परिव्राजको ब्रह्म-चारी शान्तो जितेन्द्रियः ॥ इहास्ते यदुषु स्नेहात्[7], कुर्वन् षष्ठतपः सदा ॥ ११ ॥ शाम्बादिभिः स मद्यान्धैः, कुट्टितश्चण्डतां गतः ॥ *यदुभिः सकलां साकं, द्वारकां ज्वालयिष्यति ॥ १२ ॥ वसुदेवजरादेवी-नन्दनान्निजसोदरात् ॥ भावी जराकुमाराच्च, तव मृत्युर्जनार्दन[8] ! ॥ १४ ॥ श्रुत्वेति यदवः सर्वे—ऽप्युल्मुकायितदृष्टयः[9] ॥ व्यलोकयन् जरापुत्रं, सोऽपि चैवमचिन्तयत् ॥ १४ ॥

---

*यदुभिः सकलैः साकं, द्वारकां ज्वालयिष्यति। इति 'ग' संज्ञकपुस्तके ॥ १ बलदेववासुदेवौ । २ देववधूनामिव मनोहराभिः। ३ भोगसमूहान्। ४ केवलज्ञानेन भास्करः। (सूर्यः) इव । ५ कृष्णः। ६ भयङ्करताम् । ७ बान्धवात्। ८ हे कृष्ण। ९ उल्मुकं (अङ्गारः) इव आचरिता दृष्टयः येषां ते।

कनीयांस कुलाधारं, भ्रातरं भ्रातृवत्सलम् ॥ कथङ्कारं हनिष्यामि ? वसुदेवसुतोऽप्यहम् ! ॥ १५ ॥ तदेतदन्यथा कुर्वे, ध्यायन्निति जराङ्गजः ॥ जिनं नत्वा ययौ सद्यः, कान्तारं चापतूणभृत् ॥ १६ ॥ जिनवाचं जनश्रुत्या, श्रुत्वा द्वैपायनोऽपि ताम् ॥ यदूनां द्वारकायाश्च, रक्षां कर्तुमगाद्वनम् ॥ १७ ॥ नत्वार्हन्तं हरिरपि, प्राविशद्द्वारकापुरीम् ॥ तं चानर्थं मद्यमूलं, ध्यायन्नित्युदघोषयत् ॥ १८ ॥ मद्योन्मत्तकुमारौघ-हताद्वैपायनाद्यतः ॥ उपद्रवो द्वारकायाः, श्रीनेमिस्वामिनोदितः ॥ १९ ॥ तत्पार्श्वस्थाचलासन्न-कदम्बवनमध्यतः ॥ कादम्बरीदरीवर्त्ति—शिलाकुण्डेषु भूरिषु ॥ २० ॥ सकलं प्राक्कृतं मद्यं, हेयं पेयं न तत्पुनः ॥ लोकाः सर्वेऽपि तच्छ्रुत्वा, जहुस्तत्राखिलां सुराम् ॥ २१ ॥ ( त्रिभिर्विशेषकम् ) भ्राताऽथ बलदेवस्य स्नेहात्तस्यैव सारथिः ॥ सिद्धार्थः श्रुतसर्वज्ञ—वाणिरित्यवदद्बलम् ॥ २२ ॥ नोत्सहे दुर्दशा प्राप्ते, द्रष्टुं स्वीयंपुरीकुले ॥ तदहं स्वामिपादान्ते, प्रव्रजामि त्वदाज्ञया ॥२३॥ ततोऽब्रवीद्बलोऽजस्र—स्रवदश्रुजलाविलः ॥ भ्रातर्मयेदं त्वद्वश्य-प्राणेनाऽप्यनुमन्यते ॥ २४ ॥ किन्तु व्रतं पालयित्वा, त्वं देवत्वमुपागतः ॥ भ्रातर्मां व्यसनप्राप्त-मागत्य प्रतिबोधयेः ॥ २५ ॥ तत्प्रपद्याथ सिद्धार्थो, परिव्रज्य जिनान्तिके ॥ अत्युग्रश्च तपस्तप्त्वा, षड्भिर्मासैः सुरोऽभवत् ॥ २६ ॥ इतश्चानेकवृक्षौघ-पतत्कुसुमसङ्गमात् ॥ षण्मास्या सा सुरा कुण्ड-स्थिता पक्वरसाऽभवत् ॥ २७ ॥ तदा च कोऽपि शाम्बस्य, लुब्धकः पर्यटन् वने ॥ तत्र यातस्तृपाक्रान्तः, पपौ तां मदिरां मुदा ॥ २८ ॥ मुदितस्तेन मद्येन, भृत्वा पार्श्वस्थितां दृतिम् ॥ ददौ शाम्बाय तत्पीत्वा, तुष्टः शाम्बोऽपि तं जगौ ॥ २९ ॥ प्राप्तं हृद्यमिदं मद्य—मद्य कुत्र ? त्वया सखे ! ॥ कादम्बरीकन्दराया--मवापमिति सोऽप्यवक् ॥ ३० ॥ कुमारैः सह दुर्दान्तै-स्ततः शाम्बोऽपरेऽहनि ॥ गुहां कादम्बरीं

१ लघुम् । २ बाणधनुर्भृत् । ३ अचल पर्वतः । ४ दरी गुफा । ५ आत्मीय । ६ अजस्रं [ निरन्तरः ] अस्खलित इत्यर्थः । ७ व्याधः ।

गत्वा, मुदितमना सुरां पपौ ॥ ३१ ॥ बहोः कालादधिगतां, यावत्तृप्ति निपीय ताम् ॥ उन्मत्ता गीरिमारोहन् क्रीडन्तस्ते कुमारकाः ॥ ३२ ॥ तत्र द्वैपायनं ध्यान-स्थितमातापनापरम् ॥ वीक्ष्येति ते मिथः प्रोचु-र्मद्योन्मादवशंवदाः ! ॥ ३३ ॥ अयं हि नेमिना प्रोक्तो-ऽस्मत्पुरीकुलनाशकः ! ॥ तद्वन्यतां तां हतो ह्येष, कथं हन्ता पुरीकुलें ! ॥ ३४ ॥ वदन्त इति ते सर्वे, चपेटायष्टिमुष्टिभिः ॥ निघ्नन्तुः पादघातैश्च, द्वैपायनमुनिं मुहुः ॥३५॥ इत्थं हत्वा मृतप्रायं, विधाय धरणीतले ॥ पातयित्वा च ते जग्मुः, कुमारा द्वारकापुरीम् ॥ ३६ ॥ तद्विज्ञाय चरैर्विष्णु-र्विषण्णो ध्यातवानिति ॥ अहो ! एषां कुमाराणां दुर्दान्तत्वमनर्थकृत् ! ॥ ३७ ॥ अथैषां प्राणभूतानां, किं करोमीति चिन्तयन् ? ॥ द्वैपायनमनुनेतुं, तत्रागात्सबलो हरिः ! ॥३८॥ तत्रापश्यत्परिव्राजं, कोपारुणविलोचनम् ॥ ततस्तत्कोपशान्त्यर्थ-मभ्यधादिति माधवः ॥ ३९ ॥ भो महातापस ! क्रोधः, परत्राऽत्र च दुःखदः ॥ नैवातः क्वापि कुप्यन्ति, महासत्त्वा दमेरताः ॥ ४० ॥ मद्योन्मादान्निर्विवेकै-र्मन्दज्ञानैश्च मत्सुतैः ॥ एभिर्यदपराद्धं त-न्महर्षे ! मृष्यतां त्वया ॥ ४१ ॥ इत्युक्तेऽपि स कृष्णेना-ऽशान्तक्रोधोऽभ्याधादिदम् ॥ भवतः सामवचनै-रथामीभिः कृतं हरे ! ॥ ४२ ॥ युवां मुक्त्वा लोकयुक्ता, निर्दग्धुं द्वारकां मया ॥ चक्रे निदानं त्वत्पुत्रै-र्हन्यमानेन निष्ठुरम् ! ॥ ४३ ॥ नालीकं नेमिवाक्यं त-त्प्रतिज्ञाऽप्यन्यथा न मे ॥ तद्युवां यातमग्नौ हि, दीप्तेऽन्धुंखननेन किम् ? ॥४४॥ रामोऽप्युवाच हे भ्रातः, प्रयत्नेनामुना कृतम् ! ॥ किं चाटूनि विधीयन्ते, मुधाऽमुष्य त्रिदण्डिनः ? ॥४५॥ अवश्यं भाव्यपाकर्तुं, न शक्रोऽपि प्रभूयते ॥ न च सर्वविदो वाक्य-मन्यथा स्यात्कथञ्चन ! ॥ ४६ ॥ ततः शोकाकुलमना, निजं धाम ययौ हरिः ॥ प्रसिद्धमासील्लोके च, द्वैपायननिदानकम् ॥ ४७ ॥ अथाऽच्युतो द्वितीयेह्नि,

१ रोद्रुण. । २ यद्वा मदितः । ३-४ केशवः । ५ जितेन्द्रियाः । ६ क्षम्यता । ७ रूपः । ८ इन्द्रोऽपि न समर्थः । ९ अर्हनः । १० विष्णुः ।

इत्युक्त्वा ते नमस्कारान् , गणयन्तोऽवतस्थिरे ॥ ८० ॥ द्वैपायनामरस्तेषु, वत्रर्षाथ [1]हुताशनम् ॥ ततो मृत्वाऽभवन् देवा, वसु-
देवादयस्त्रयः ॥ ८१ ॥ अथो रुदन्तौ करुणं, बहिर्गत्वा बलाच्युतौ ॥ जीर्णोद्यानस्थितौ दह्य-मानां ददृशतुः पुरीम् ॥ ८२ ॥
ज्वलत्पशुजनाक्रन्द-कोलाहलसमाकुलाम् ॥ परितः [2]प्रसृतज्वाला-जिह्वज्वालाकरालिताम् ॥ ८३ ॥ श्राद्धदेवश्रोत्रियस्य, वह्निकुण्डत्व-
माश्रिताम् ॥ तौ वीक्ष्य द्वारकां बाष्पा-प्लुताक्षाविति दध्यतुः ॥ ८४ ॥ [ युग्मम् ] पुरन्दरधनुष्कल्प-[3]मनित्यत्वमहो ! श्रियाम् ॥
जलबुद्बुददेश्यं[4] च, जीवितव्यमहो ! विशाम्[5] ॥ ८५ ॥ स्वप्नसङ्गमकल्पाश्च, बन्धुसङ्गा अहो अमी ! ॥ अहो ! अप्रतिकार्यत्वं, भवित-
व्यस्य वस्तुनः ॥ ८६ ॥ यदुक्तं-"धारिज्जइ इंतो जल-निही वि कल्लोलभिन्नकुलसेलो ॥ न हु अन्नजम्मनिम्मिअसुहासुहो दिव्वपरि-
णामो ॥ ८७ ॥" अथोवाच हरिः सर्व-सम्पत्स्वजनवर्जितौ ॥ आवां भ्रातः ! क यास्यावो ?, भीतौ यूथच्युतैणवत्[6] ॥ ८८ ॥ बलो-
ऽवादीत्पाण्डुपुत्राः, सन्ति नः स्निग्धबान्धवाः ॥ तत्पुरीं पाण्डुमथुरां, यास्यावोऽवाच्यैवमब्धिगाम्[7] ॥ ८९ ॥ प्रोचे कृष्णो मया
कृष्णां[8], प्रत्यादाय समेयुषा ॥ गङ्गोत्तरणवेलायां, वेडान्तर्द्धानरोषतः[9] ॥ ९० ॥ पाण्डवा राज्यमाच्छिद्य, तदा निर्विषयाः[10] कृताः ॥
दुर्दशायां गमिष्यावः, तत्पार्श्वे साम्प्रतं कथम् ? ॥ ९१ ॥ (युग्मम्) रामोऽवग् न स्मरन्त्यार्या, दुःस्वप्नमिव विप्रियम् ॥ दुष्प्रापम
न्त्रवसेवो-पकारं विसरन्ति च ॥ ९२ ॥ तन्मेदं विमृश भ्रातः !, कर्त्तारो भक्तिमेव ते ॥ श्रुत्वेति सबलः पूर्वां, प्रत्यचालीज्जना-
र्दनः ॥ ९३ ॥ इतश्च द्वारकापुर्यां, ज्वलन्त्यां कुब्जवारकः ॥ रामसूनुः स्वगेहाग्र-मारुह्योच्चैरदोऽवदत् ॥ ९४ ॥ अहं

१ अग्निम् । २ प्रसृतवह्निज्वालाभयङ्कराम् । ३ इन्द्रधनुः समानम् । ४ बुद्बुदम् 'परपोटो' इति भा० । ५ प्राणीनाम् । ६ यूथभ्रष्टहरिणवत् ।
~~यास्यावोऽमाच्यमब्धिगाम्~~ । ७ समुद्रगाम् । ८ द्रौपदीम् । ९ गोपनद्वेषतः । १० देशरहिताः ।

दक्षिणा

